क्षान्ति—क्षुद्र



क्षुद्र—क्षेपि



क्षेम—खजा

**जला—जाग.**



**जाग—जाय.**



**जाया—जीर्ण.**

**ताम्र—ताव.**



**तिक्त—तिरो.**



**तिरो—तुच्छ.**

## तृषि — तोर.



## तौर्य्य — त्रित.



## त्रिद — त्रिहा.

**दभ्र—दर्श.**



**दर्श—दाडि.**



**दाण्ड—दार्वा.**

### निगा—निध.



### निधि—निया.



### निया—निर्ज.

## नेमि—न्याय्य.



## न्यास—पंक्ति.



## पंक्ती—पटी.

**प्रसू—प्राक्.**



**प्राका—प्राय.**



**प्रादू—प्राश.**

### प्रास—प्रेष्ठ.



### प्रेष्य—फटा.



### फण—फाल.

### भाल्लु—भिया.



### भिष—भुज.



### भुज—भूमि.

**वाजि—वात.**



**वात—वाम.**



**वाम—वारि.**

वैदे—वौष.



व्य—व्याघ्र.



व्याघ्र—व्युष्टि

**शिला—शिश्न.**



**शिश्वि—शुक.**



**शुक्ति—शुभ्र.**

## सार—सिंहा



## सिंहा—सिन्दु



## सिन्दू—सुक्ष.

**सुक्ष—सुन्द.**



**सुन्द – सुर.**



**सुर—सुषे**

---

*FINIS.*

# अभिधानचिन्तामणिः ।

(सङ्क्षिप्तटीकासहितः)

आचार्य्य श्रीहेमचन्द्रसूरिविरचितः ।



वेदान्तवागीशोपनामक-श्रीकालीवर शर्म्मणा

ब्रह्मपुर-वास्तव्येन

श्रीरामदास सेनेन च संस्कृतः ।




कलिकातानगरे

श्रीयुक्त बाबु भुवनचन्द्रवसाक-संस्थापितसंवाद

ज्ञानरत्नाकराख्य यन्त्रे तद्द्वारैव

१८३४ संवत्सरे

मुद्रितं प्रकाशितञ्च ।

निमतल्लाघाट ष्ट्रीट ८ संख्यक भवन ।

# विज्ञापनम् ।

प्रबन्धचिन्तामण्यादि-जैनेतिहासग्रन्थेषु तुङ्गनाथाचार्य्यप्रभृतिभिर्जैनैरेवमाख्यायते, विक्रमार्कसमयात् प्रगतेषु ११९९ नवनवत्यधिकैकादशशतसम्वत्सरेषु राजा कुमारपालो राज्यञ्चकार । तदा च तदीयदेशिकः श्रीहेमचन्द्राभिधः सूरीत्युपनामको विदग्धशिरोमणि-राचार्य्यो बभूव । तेनैवाचार्य्येणाऽभिधानमिदं निर्माय राज्ञे कुमारपालायोपढौकितमासीत् । अपरमप्येकमभिधानमनेकार्थशब्दसंग्रहाख्यं सिद्धशब्दानुशासन-नामकञ्च व्याकरणमेतस्मादेवाचार्य्यादेतस्याभिधानचिन्तामणेः प्रागुदयं लेभे । राजा कुमारपाल-स्तत्तद्ग्रन्थगुणानवगन्तु प्रचयेषु च शिष्यप्रशिष्येषु गमयितुं नानादेशीयान् पण्डितान् सबहुमानमाहूय तेभ्यस्तांस्तद्ग्रन्थान् निवेदयामास । ते च सर्व्वे पद-वाक्य-प्रमाणनिपुणाः पण्डितास्तांस्तान् ग्रन्थान् सयत्नमालोच्य सहर्षमाहू राजन् सर्व्वमवदातं सर्व्वं चतुरस्रं सर्वं सर्व्वतः शुद्धं विशेषतोऽयमभिधानचिन्तामणिः सर्व्वेष्वपि कोषेषु समीचीन इति मतिरस्माकम् । तस्मादेतस्याभिधानचिन्तामणेः समीचीनताख्यातिः सर्व्वत्र प्रचरति । तदेतादृशस्य समीचीनकोषस्य दुर्लभतानिराकरणमतीवावश्यकमिति मत्वा पञ्चनवत्यधिकसप्त-

द्वयशतयक सम्वत्सरेऽस्याकमेतन्मुद्रणे मतिरभूत्। तत आरब्धास्माभिर्बङ्ग्यतततो नानादेशानि पुस्तकान्याहृत्य पाठशुद्धिं विधाय सम्प्रदायपरम्परागतखण्डटीप्पन-वाक्यानि च सङ्कलय्य यथास्थानं सन्निवेश्य सर्वतः संशो-ध्याऽस्य मुद्राङ्कनविधिः समर्थितः। तत्कृतनाममालायाः शिलोञ्छनामकश्चापरः परिशिष्टात्मकश्चन्द्रोग्रन्थोऽप्यत्र पुस्तकशेषे संयोजितः।

ये च श्रीहेमचन्द्रसूरिनामकाचार्य्यस्य राज्ञश्च कुमार-पालस्य जीवनवृत्तान्तजिज्ञासवस्तैः सर्वैं ब्रह्मपुरवास्तव्येन सुप्रसिद्धभूम्यधिकारिणा श्रीमता रामदास सेनेन कृतगैति-हासिक रहस्याख्यं वङ्गभाषा पुस्तकं द्रष्टव्यम्। तत्र तेन महोदयेन राज्ञः कुमारपालस्य हेमचन्द्राचार्य्यस्य च सर्वं जीवनवृत्तं सुनिपुणं व्यलेखि।

इदानीन्त्वियं प्रार्थना विद्वज्जनसकाशे।
विमृश्य मुद्रितोऽयं मे यथाशक्ति यथामति।
यदत्र दुष्टं किमपि विद्वांसः शोधयन्तु तत्॥

इत्यलम्पल्लवितेन।
वेदान्तवागीशोपनामक-
श्रीकालीवरशर्म्मा भट्टाचार्य्यस्य।

श्रीगणेशाय नमः ।

# अभिधानचिन्तामणौ ।

## देवाधिदेव काण्ड ।

प्रथमः ।

(१)प्रणिपत्याऽर्हतः सिद्धसाङ्गशब्दानुशासनः ।
रूढयौगिकमिश्राणां नाम्नां मालां तनोम्यहम् ॥१॥
(२)व्युत्पत्तिरहिताः शब्दा रूढा आखण्डलादयः ।
योगोऽन्वयः स तु गुणक्रियासम्बन्धसम्भवः ॥ २ ॥
गुणतो नीलकण्ठाद्याः क्रियातः स्रष्टसन्निभाः ।
स्वस्वामित्वादि सम्बन्ध स्तत्राऽऽहुर्नाम तद्वताम् ॥३॥
स्वात् पाल-धन-भुग्-नेतृ-पति-मत्वर्थका-ऽऽदयः ।
भूपालो भूधनो भूभुग् भूनेता भूपति स्तथा ॥४॥
भूमांश्चेति कविरूढ्या।(३) ज्ञेयोदाहरणावली ।

(१) अहं हेमचन्द्राचार्यः नाम्नां मालान्तनोमीति क्रिया संटङ्कः, नामच नाम्नीच नामानिच नामानि, तेषां नाम्नां, स्यादावसंख्येय इत्येकशेषः, किं इतानां नाम्नां ? रूढानिच कविपरम्परागतत्वात् प्रसिद्धानि, यौगिकानिच गुणक्रिया स्वस्वामित्वादि सम्बन्धलक्षण योगात् जातानि । किं इतोहं ? सिद्धं निष्पन्नं प्रतिष्ठां प्राप्तं साङ्ग-लिङ्गानुशासन धातुपारायणादिभि रङ्गैःसहितं शब्दानुशासनं श्रीसिद्ध हेमचन्द्राभिधानं व्याकरणं यस्य स सिद्धसाङ्गशब्दानुशासनः ।

(२) रूढाञ्छब्दान् व्याख्याति व्युत्पत्तीति । व्युत्पत्त्या धातुप्रत्यय-विभागेन रहिताः अन्वर्थवर्ज्जिताः शब्दा नामानि रूढाः अव्युत्पन्नाः कविजनप्रसिद्धाः उच्यन्ते इति शेषः, ते के ? इत्याह आखण्डलादय इति ।

(३) कवीनां रूढिः परम्परायाता प्रसिद्धिः तया नतु कविरूढ्याति

(४) जन्यात्कृत्-कर्त्तृ-सृट्-स्रष्टृ-विधातृ-कर-सू-समाः ॥५॥
(५) जनकाद्योनि-ज-रुह-जन्म-भू-सूत्यादयः(६) ।
(७) धार्य्यात् ध्वजा-ऽस्त्र-पाण्य-ऽङ्क-मौलि-भूषण-भृन्निभाः ॥६॥

---

क्रमेण, यथा कपालीत्यादौ सत्यपि स्वस्वाभिसम्बन्धे कपालीतिमत्वर्थीयान्त एव भवति नतु कपालपालः कपालधनः कपालभुक् इत्यादि ।

(४) जन्यजनकभावसम्बन्धो यथा जन्यात् कार्य्यात्परे कृदादयस्तद्वतां जनकानां कारणानां नामाहुः, यथा, विश्वकृत् विश्वकर्त्ता विश्वसृट् विश्वस्रष्टा विश्वधाता विश्वकरः विश्वसूः ब्रह्मा, तस्य हि विश्वं जन्यमिति रूढिः, समशब्द आद्यर्थः तेन विश्वकारकः विश्वजनक इत्याद्यपि कविरूढेरित्येव न हि यथा चित्रकृदुच्यते तथा चित्रसूरिति भवति ।

(५) तथा जनकात्परे योन्यादयः शब्दाः तद्वतां कारणवतां कार्याणां नामाहुः, यथा, आत्मयोनिः आत्मजः आत्मरुहः आत्मजन्मा आत्मभूः आत्मसूतिः ब्रह्मा, तस्य ह्यात्मा कारणमिति रूढिः, वक्ष्यमाणस्यादिशब्दस्याभिसम्बन्धात् सम्भवादयोपि गृह्यन्ते।

(६) अणादयस्तु भृगोरपत्यं भार्गवः दितेरपत्यं दैत्यः वत्सस्यापत्यं वात्स्यायन इत्यादि अत्रापि, भार्गवादीनां भृग्वादयो जनका इति रूढिः कविरूढेरित्येव, नहि आत्मयोनिवदात्मजनकः आत्मकारकः इति भवति ।

(७) धार्य्यधारकभावसम्बन्धे यथा धार्य्यात्परे ध्वजादयः शब्दाः धारकस्य नामाहुः, यथा, वृषध्वजः शूलास्त्रः पिनाकपाणिः वृषाङ्कः चन्द्रमौलिः शशिभूषणः शूलभृत्, निभग्रहणात् तल्लक्षणाः गृह्यन्ते यथा-वृषकेतनः शूलायुधः वृषलक्ष्मा चन्द्रशिराः चन्द्राभरणादयः, तथा पिनाकशाली शशिशेखरः शूली पिनाकमाली पिनाकभर्त्ता गङ्गाधरः कविरूढेरित्येव, तेन, सत्यपि धार्यधारकभावसम्बन्धे न सर्वेभ्यो ध्वजाद्यर्थाः शब्दाः संयोज्याः, न हि भवति वृषध्वजवत् शूलध्वजः शूलास्त्रवच्चन्द्रास्त्रः पिनाकपाणिवद्वह्निपाणिः वृषाङ्कवच्चन्द्राङ्कः चन्द्रमौलिवत् गङ्गामौलिः शशिभूषणवत् शूलभूषणः ।

पिनाकं बिभर्त्ति धारयतीतिकृत्वा पिनाकभर्त्ता इत्यपि

शालि-च्छेद-मत्वर्थ-शालि-भर्तृ-धरा अपि । ॥७॥

(८) भोज्यात् भुग-अन्धो-व्रत-लिट्-पायि-पा-आशा-अशना-आदय

पत्युः कान्ता-प्रियतम-वधू-प्रणयिनी-निभाः(९) ।

कलत्रात् वर-रमण-प्रणयी-श-प्रिया-आदयः ॥ ८ ॥

(१०) सख्युः सखिसमौ(११) वाह्यात् गामि-यान-आसना-आदयः ।

(१२) ज्ञातेः स्वसृ-दुहिता-आत्मजा-अग्रजा-अवरजा-आदयः ॥९

(१३) आश्रयात् सद्मपर्याय-शय-वासि-सदा-आदयः ।

(१४) वध्यात् भिद्-द्वेषि-जित्-घाति-भुग-अरि-ध्वंसि-शासनाः ॥१०

अन्तकारि-दमन-दर्पच्छित्-मथना-आदयः ।

विवक्षितो हि सम्बन्ध एकतोऽपि पदान्ततः ॥ ११ ॥

---

(८) भोज्यभोजकभावसम्बन्ध अत्र मधुव्रतादयो ज्ञेयाः ।

(९) निभग्रहणात्-रमणी,वल्लभा,प्रिया प्रभृतयो गृह्यन्ते कविरूढेरत्येव ।

(१०) सखिवाचकात् शब्दात् परे सखिसमानार्थाः शब्दाः तद्वतां नामाङ्कः, यथा, श्रीकण्ठस्य सखा श्रीकण्ठसखः कुबेरः, मधुसखः कामः,समग्रहणात् सुहृदादयो गृह्यन्ते कविरूढेरेव,नहि भवति यथा श्रीकण्ठसखा धनदस्तथा धनदसखः श्रीकण्ठ इति ।

(११) वाह्यवाहकसम्बन्धो यथा,वृषगामी वृषयानः वृषासनः शम्भुः, आदिशब्दात् वृषवाहनादयो गृह्यन्ते ।

(१२) यमस्वसा यमुना,हिमवद्दुहिता गौरी,दशरथात्मजो रामः गदाग्रजः कृष्णः,रामावरजः कृष्णो लक्ष्मणश्च,आदिशब्दात् रामानुजादयोऽपि गृह्यन्ते ।

(१३) आश्रयाश्रयिभावसम्बन्धे,द्युसद्मानो देवाः द्युशयाः द्युवासिनः द्युसदः ।

(१४) वध्यवधकभावसम्बन्धो यथा, पुरशब्दादग्रे भिदादयो योजिताः शिवनामानि स्युः, यथा,पुरभित् पुरद्वेषी पुरजित् पुरघातिः पुरभुक् पुरारिः पुरध्वंसी पुरशासनः पुरान्तकारी पुरदमनः पुरदर्पच्छिद् पुरमथनः ।

प्राक्प्रदर्शितसम्बन्धि शब्दा योज्या यथोचितम्।
दृश्यते खलु वाच्यत्वे वृषस्य वृषवाहनः ॥१२॥
स्वत्वे पुनर् वृषपति धार्य्यत्वे वृषलाञ्छनः।
अंशो धार्य्यत्वे ऽंशुमाली स्वत्वे ऽंशुपति रंशुमान् ॥१३
वध्यत्वे ऽहेर ऽहिरिपु र्भोज्यत्वे चा ऽहिभुक् शिखी।
चिह्ने व्यक्तौ भवेत् व्यक्तौ ज्योतिशब्दो ऽपि वाचकः ॥१४।
तथा[15] ह्यऽगस्तिपूतादिग् दक्षिणा-ऽशा निगद्यते।
अयुग्-विषमशब्दौ त्रि-पञ्च-सप्ता-दिवाचकौ ॥ १५ ॥
[16]त्रिनेत्र पञ्चेषु सप्त पलाशा-ऽदिषु योजयेत्।
[17]गुणशब्दो विरोध्यर्थं नञा ऽदि इतरो-त्तरः ॥१६॥
अभिधत्ते यथा कृष्णः स्याद ऽसितः सितेतरः।
[18]वार्द्ध्यादिषु पदे पूर्व्वे वडवाग्नयादिषू त्तरे[19] ॥१७॥
[20]द्वये ऽपि भृद्धरा-ऽद्येषु पर्य्यायपरिवर्त्तनम्।
एवं परावृत्तिसहा योगात् स्यु रिति यौगिकाः ॥१८॥

(१५) तथा सप्तर्षिपूतादिक् उत्तराशाः।

(१६) अयुङ्नेत्रो विषमनेत्रश्च शम्भुः, अयुगिषु विषमेषुश्च कामः, अयुक्पलाशो विषमपलाशश्च सप्तपर्णी नाम वृक्षः, आदिशब्दात् नव-शक्तिः अयुक्शक्तिः विषमशक्तिश्च शम्भुः।

(१७) गुणशब्दो गुणवाचकः शब्दो नञादिभि रितरोत्तरश्च विरोधिनमर्थं अभिधत्ते बोधयतीत्यर्थः।

(१८) वार्द्धिः जलधिः तोयधिः आदिशब्दात्-जलदः तोयदः नीरद इत्यादि।

(१९) वडवाग्निः वडवानलः वडवावह्निः आदिनासरोज सरोरुह-मित्यादि। वल वा इत्यत्र वाड़वा इति केचित्।

(२०) भूभृत् उर्व्वीभृत् भूधरः उर्व्वीधरः आदिनासुरपतिः देव-राज इत्यादि।

(२१)मिश्राः पुनः परावृत्त्य-ऽसहा गीर्व्वाण सन्निभाः(२२ ।
प्रवक्ष्यन्ते ऽत्र लिङ्गं तु ज्ञेयं लिङ्गानुशासनात् ॥ १९ ॥
देवाधिदेवाः प्रथमे काण्डे देवा द्वितीयके ।
नरा स्तृतीये तिर्य्यञ्चः तुर्य्ये एकेन्द्रियादयः ॥ २० ॥
एकेन्द्रियाः पृथिव्य-ऽम्बु-तेजो-वायु-महीरुहः ।
कृमि-पीलक-लूता-ऽद्याः स्यु र्द्वि-त्रि-चतु-रिन्द्रियाः ॥ २१ ॥
पञ्चेन्द्रिया स्त्वि भ-केकि-मत्स्या-ऽद्याः स्थल-खा-ऽम्बु-गाः ।
पञ्चेन्द्रिया एव-देवा-नरा नैरयिका-अपि ॥ २२ ॥
नारकाः पञ्चमे षाङ्गाः षष्ठे साधारणाः स्फुटम् ।
प्रस्तोष्यन्ते ऽव्यया श्चा-ऽत्र त्वन्ताथादी न पूर्व्वगौ ॥ २३ ॥

(२३)अर्हन्[1] जिनः[2] पारगत[3] ऽस्त्रिकालवित्[4]
क्षीणाष्टकर्म्मा[5] परमेष्ठ्य[6] धीश्वरः[7] ।
शम्भुः[8] स्वयम्भू[9] र्भगवान्[10] जगत्प्रभु[11]
स्तीर्थङ्कर[12] स्तीर्थकरो[13] जिनेश्वरः[14] ॥ २४ ॥
स्याद्वाद्य[15] ऽभयद[16] सार्व्वाः[17]
सर्व्वज्ञः[18] सर्व्वदर्शि[19] केवलिनौ[20] ।

---

(२१) मिश्रान् व्याख्यति । गीर्वाणादयः शब्दाः परावृत्तिं पर्य्यायाणां परिवर्त्तनं न सहन्ते न क्षमन्ते इति परावृत्त्यसहाः, पूर्व्वत्र उत्तरत्र उभयत्र पदे परावृत्ति र्न भवति पर्यायाणामित्यर्थः ।

(२२) सन्निभग्रहणात् दशरथः कृतान्त इत्यादि ।

(२३) सुरेन्द्रादिकृतां पूजामर्हतीत्यर्हन्, जयति रागद्वेष मोहादीन् इति जिनः, संसारस्य पारं पर्य्यन्तं गत इति पारगतः, त्रीन् कालान् (भूतं भवन्तं भविष्यन्तञ्चेति) वेत्ति इति त्रिकालवित्, क्षीणान्यष्टौ कर्म्माण्यस्य इति क्षीणाष्टकर्म्मा, परमे पदे तिष्ठतीति परमेष्ठी (इन् प्रत्ययान्तोऽयम्) अधीष्टे इत्येवं शीलोऽधीश्वरः, शं शाश्वतं सुखमस्मात् भव-

(४१)समुद्रविजय[२२] आऽश्वसेन:[२३]सिद्धार्थ[२४] एव च(४२) ॥३८॥
(४३)मरुदेवा[१] विजया[२] सेना[३] सिद्धार्था[४] च मङ्गला[५],
तत: सुसीमा[६] पृथ्वी[७] लक्ष्मणा[८] रामा[९] तत: परम् ॥३९॥
नन्दा[१०] विष्णु[११] ज या[१२]
श्यामा[१३] सुयशा:[१४] सुव्रता[१५] ऽचिरा[१६]।
श्री[१७] देवी[१८] प्रभावती[१९] च
पद्मा[२०] वप्रा[२१] शिवा[२२] तथा ॥४०॥
वामा[२३] त्रिशला[२४] क्रमत: पितरो मातरोऽर्हताम्।
(४४)स्या द्गोमुखो महायक्ष[२] स्त्रिमुखो[३]यक्षनायक:[४] ॥४१॥
तुम्बुरु:[५] कुसुम[६]श्चापि मातङ्गो[७] विजयो[८]ऽजित:[९]।
ब्रह्मा[१०] यक्षेट्[११] कुमार[१२]श्च
न्मुख[१३]पाताल[१४] किन्नरा:[१५] ॥४२॥
गरुडो[१६] गन्धर्वो[१७] यक्षेट्[१८] कुबेरो[१९] वरुणो[२०]ऽपि च।
भृकुटि[२१] र्गोमेध:[२२]पार्श्वो[२३]
मातङ्ग:[२४] ऽर्हदुपासका:(४५) ॥४३॥
(४६)चक्रेश्वर्य(४७)ऽजितबला[२] दुरितारि[३]श्च कालिका[४]।
(४८)महाकाली[५] श्यामा[६] शान्ता[७]
भृकुटि[८]श्च सुतारका[९] ॥४४॥

---

(४१) गाम्भीर्येन समुद्रस्यापि विजेता इति समुद्रविजय:।

(४२) सिद्धा अर्था: पुरुषार्था अस्य इति सिद्धार्थ:,चतुर्विंशति जिन पितृनामानि।

(४३) इत्यादि मातृणामेकैकम्, मरुदेव्यपि क्वचित्पाठ:।

(४४) जिनयक्षाणामेकैकम्। (४५) चतुर्विंशतिजिनयक्षिणीनामानि।

(४६) अर्हतांशासनदेवीनामेकैकम्।

(४७) अजितेत्यपि, च सुतरा इत्यपि क्वचित्।

(४८) महतीचासौकालीच, महाकालिकाच।

अशोका[10] मानवी[11] चण्डा[12]
विदिता[13]चाऽङ्कुशा[14] तथा ।
कन्दर्पा[15] निर्वाणी[16] बला[17]
धारिणी[18] धरणप्रिया[19] ॥४५॥
नरदत्ता[20]ऽथ गान्धार्य[21]म्बिका[22] पद्मावती[23] तथा(१) ।
सिद्धायिका चेति जैन्यः क्रमाच्छासनदेवताः ॥४६॥

(२)वृषो[1] गजो[2]ऽश्वः[3] प्लवगः[4]
क्रौञ्चो[5]ऽब्जं[6] स्वस्तिकः[7] शशी[8] ।
मकरः[9] श्रीवत्सः[10] खड्गी[11]
महिषः[12] शूकर[13]स्तथा ॥४७॥
श्येनो[14] वज्रं[15] मृग[16]श्छागो[17] नन्द्यावर्तो[18] घटो[19]ऽपि च ।
कूर्मो[20] नीलोत्पलं[21] शङ्खः[22] फणी[23] सिंहो[24]ऽर्हतां ध्वजाः(३) ॥४८॥

(४)रक्तौ च पद्मप्रभ-वासुपूज्यौ
शुक्लौ च चन्द्रप्रभ-पुष्पदन्तौ ।
कृष्णौ पुनर्नेमि-मुनी विनीलौ
श्रीमल्लि-पार्श्वौ कनकत्विषोऽन्ये ॥४९॥
उत्सर्पिण्यामतीतायां चतुर्विंशतिरर्हताम् ।
(५)केवलज्ञानी[1](६) निर्वाणी[2] सागरो[3]ऽथ महायशाः[4] ॥५०॥

(१) पद्मं करेऽस्त्यस्या इति पद्मावती, मतुप् दीर्घश्च ।
(२) अर्हद्ध्वजानामेकैकम् ध्वजोवाहनम् ।
(३) अर्हद्वाहननामानि चतुर्विंशतिः ।
(४) अर्हतां रूपवर्णनम् ।  (५) भूतार्हन्नामैकैकम् ।
(६) केवलं ज्ञानमस्यास्तीति केवलज्ञानी, निर्वाणमस्यास्तीति निर्वाणी, गाम्भीर्येण सागर इव सागरः, महद्व्यापकत्वात् यशोऽस्य इति

विमल[५]: सर्व्वानुभूति:[६] श्रीधरो[७] दत्ततीर्थकृत्[८]।
दामोदर:[९] सुतेजा[१०] श्च स्वाम्यथो[११] मुनिसुव्रत:[१२] ॥५१॥
सुमति: शिवगति श्चैवा ऽस्तागो ऽथ निमीश्वर:।
अनिलो[१७] यशोधराख्य:[१८] कृतार्थो[१९] ऽथ जिनेश्वर:[२०] ॥५२॥
शुद्धमति:[२१] शिवकर:[२२] स्यन्दनश्चाथ[२३] सम्प्रति।
भाविन्या[(१)] न्तु पद्मनाभ:[१] शूरदेव:[२] सुपार्श्वक:[३] ॥५३॥
स्वयंप्रभ[४] श्च सर्व्वानुभूति[५] र्देवश्रुतो[६]-दयौ[७]।
पेटाल:[८] पोट्टिल[९] श्चापि [(२)]शतकीर्त्ति[१०] श्च सुव्रत:[११] ॥५४॥
अममो[१२] निष्कषाय[१३] श्च[(३)] निष्पुलाको[१४] ऽथ निर्म्मम:[१५]।
चित्रगुप्त:[१६] समाधि[१७] श्च संवर[१८] श्च यशोधर:[१९] ॥५५॥

---

महायशा, वीतोमलोऽस्येति विमल:, सर्व्वत्र सर्व्वगत्वादनुभूतिरस्येति सर्व्वानुभूति:, मुक्तिश्रियं धरतीति श्रीधर:, दत्तं दानमस्येति दत्त:, साचासौ तीर्थकृच्च, जन्माभिषेके सुरै: क्षिप्तं दाममुदरे यस्य स दामोदर:, शोभनं तेजोऽस्य इति सुतेजा:, शोभना मतिरस्येति सुमति:, शिवे मोक्षे गतिरस्येति शिवगति:, न विद्यते गाम्भीर्यात्स्तागोलब्धमध्यतास्येति अस्ताग: (अन्नाग इत्यपि कचित्) (निमीत्यत्र मुनीति पाठान्तरं) अनिल इव महाबलत्वादनिल:, यशांसि धरतीति यशोधर:, कृतोऽर्थ: पूजाऽस्येति कृत:, सिद्धोऽर्थ: पुरुषार्थोऽस्येति कृतार्थ:, जिनस्यासा विश्वरस्येति जिनेश्वर:, शुद्धा निर्म्मला मतिरस्येति शुद्धमति:, शिवं मोक्षं मङ्गलं वा करोतीति, स्यन्दते देशनारूपमेव तत्व मिति स्यन्दन: ॥

(१) भाव्यर्हतामेवैकम् ॥

(२) शातं ब्रह्मकीर्त्तयोऽस्येति शातकीर्त्ति: ॥

(३) निश्चितं पोलति त्रानेन मनुष्यान् सरतीति निष्पुलाक:, शुभिरर्हि पिदि पुलिं शुभ्यकिदित्याक: ॥

विजयो[२०] मल्लि[२१]देवौ चा[२२] ऽनन्तवीर्य्य[२३] श्च भद्रकृत्[२४]।
एवं सर्व्वावसर्प्पिण्युत्सर्प्पिणीषु जिनोत्तमाः ॥५६॥

तेषां[(१)] च देहो ऽद्भुतरूपगन्धो
निरामयः स्वेदमलोज्झित[१] श्च ।
श्वासो ऽब्जगन्धो[२] रुधिरा-मिष न्तु
गोक्षीर धारा धवलं ह्य विस्रम्[३] ॥५७॥
आहार-नीहारविधिस्त्व दृश्य[४]-
श्चत्वार एते ऽतिशयाः सहोत्थाः ।
क्षेत्रे स्थिति र्य्योजन मात्रकेऽपि
नृ-देव-तिर्य्यग्जनकोटि-कोटेः ॥५८॥
वाणी नृ-तिर्य्यक्-सुरलोक-भाषा
संवादिनी योजनगामिनी[२] च ।
भामण्डलं चारु च मौलिपृष्ठे
विडम्बिता-ऽहर्प्पतिमण्डलश्रि[३] ॥५९॥
साग्रे च गव्यूतिशतद्वये रुजा[४]
वैरे[५] तयो[६] मा[७]र्य्य-ति वृष्य[८] वृष्ट[९] यः।
दुर्भिक्ष[१०] मन्यस्वकचक्रतोभयं[११]
स्यान्नै त एकादश कर्म्मघातजाः ॥६०॥
खे[(२)] धर्म्मचक्रं[१] चमराः[२] सपाद-
पीठं मृगेन्द्रासनं[३] मुज्ज्वल-ञ्च ।

---

(१) तेषामिति-अर्हतां देहादिषु चतुस्त्रिंशदतिशयवर्णनम् ॥

(२) खे आकाशे धर्म्मप्रकाशे चक्रं धर्मचक्रं, खे चमराः, खे सपाद

छत्रत्रयं[४] रत्नमयोध्वजो[५]ऽङ्घ्रि
न्यासे च चामीकर पङ्कजानि[६] ॥६१॥
वप्रत्रयं[७] चारु चतुर्मुखाङ्गता[८]
चैत्यद्रुमो[९]ऽधोवदना श्च कण्टकाः[१०] ।
द्रुमानति[११] र्दुन्दुभिनाद[१२] उच्चकै
र्वातो ऽनुकूलः[१३] शकुनाः प्रदक्षिणाः[१४] ॥६२॥
गन्धाऽम्बु वर्ष[१५] बहुवर्ण पुष्प-
वृष्टिः[१६] कच-श्मश्रु-नखाप्रवृद्धिः[१७] ।
चतुर्विधा मर्त्त्य-निकायकोटि-
र्जघन्यभावा-दपि पार्श्वदेशे[१८] ॥६३॥
ऋतूना-मिन्द्रियार्थाना-मनुकूलत्व[१९]मित्यमी ।
एकोनविंशति र्दैव्या श्चतुस्त्रिंश च्च मीलिताः ॥६४॥
(१)संस्कारवत्त्व[१]-मौदात्त्य[२]-मुपचार-परीतता[३] ।

---

पीठं सिंहासनं, खे छत्रत्रयं, खे रत्नमयो ध्वजः, चत्वारि मुखानि अङ्गानि गात्राणि यस्येति चतुर्मुखाङ्गता, शकुनाः पक्षिणः ॥

(१) अथ वचनातिशयानाह संस्कारेति, संस्कारवत्त्वं संस्कृतादि-लक्षणवत्त्वम्, औदात्यम् उच्चैर्वृत्तिता, उपचारपरीतता, उपचाररहितत्वं, मेघस्येव गम्भीरशब्दत्वं, प्रतिध्वनियुक्तत्वं, दक्षिणत्वमिति सरलत्वम्, उपनीतरागत्वमिति मालव-कौशिक्यादि ग्रामरागयुक्तत्वम्, एते शब्दाश्रयाः; अन्ये चार्थाश्रया ज्ञेयाः, महार्थता बृहदभिधेयता. पूर्वापरवाक्यार्थाविरोधित्वादव्याहतत्वम् । शिष्टत्वमिति अभिमतसिद्धौ वक्तु र्मनोज्ञार्थ प्रयोजकत्वं शिष्टतासूचकत्वं वा, संशयाना मसम्भव इति असन्दिग्धता, परदूषणाविषयता, मिथः साकाङ्क्षता इति परस्परेण पदानां वाक्यानां वा सापेक्षत्वं, प्रस्तावौचित्यं देशकालाद्यनतीतत्वं,

मेघगम्भीरघोषत्वं[4] प्रतिनादविधायिता[5] ॥६५॥
दक्षिणत्वं[6]-मुपनीतरागत्वं[7] च महार्थता[8] ।
अव्याहतत्वं[9] शिष्टत्वं[10] संशयाना-मसम्भवः[11] ॥६६॥
निराकृतान्योत्तरत्वं[12] हृदयङ्गमता-पि[13] च ।
मिथः साकाङ्क्षता[14] प्रस्तावौचित्यं[15] तत्त्वनिष्ठता[16]॥६७॥
अप्रकीर्णप्रसृतत्व[17]मस्वश्लाघा-ऽन्यनिन्दता[18] ।
आभिजात्यमतिस्निग्ध मधुरत्वं[20] प्रशस्यता[21] ॥६८॥
अमर्मवेधितौ[22] दार्यं[23] धर्मार्थप्रतिबद्धता[24] ।
कारकाद्यविपर्यासो[25] विभ्रमादिवियुक्तता[26] ॥६९॥
चित्रकृत्त्व[27] मद्भुतत्वं[28] तथा-ऽनतिविलम्बिता[29] ।
अनेकजातिवैचित्र्य[30] मारोपित-विशेषता[31] ॥७०॥
सत्त्वप्रधानता[2] वर्णपदवाक्यविविक्तता[33] ।
अव्युच्छित्ति[34] रखेदित्वं[5] पञ्चत्रिंशच्च वाग्गुणाः[61] ॥७१॥
[62]अन्तराया दान[1] लाभ[2]वीर्य[3]भोगो[4]-पभोग[5]गाः ।
हासो[6] रत्य[7]रती[8] भीति[9] र्जुगुप्सा[10] शोक[11] एव च ॥७२॥

---

विरचित वस्तु स्वरूपानुसारिता तत्त्वनिष्ठता, सुसम्बन्धस्य सतः प्रस-रणम् अप्रकीर्णप्रसृतिः। स्वश्लाघेति आत्मोत्कर्षपरनिन्दा विप्रयुक्तत्वम्, आभिजात्यत्वं वक्तुः प्रतिपाद्यस्य अथवा वक्तुर्भूमिकानुसारिता, घृत गुडादिवत् सुखकारिते स्निग्धमधुरत्वं, प्राप्तश्लाघ्यता प्रशस्यता, परधर्मानुद्घाटनस्वरूपम् अमर्मवेधिता । इत्येवमन्येषामपि शब्दानां व्युत्पत्त्यनुरूपा अर्था उन्नेयाः॥

(६१) पञ्चविंशति जिन वाणीगुण नामानि बोद्धव्यानि।

(६२) अष्टादशदोषाभावानामेकैकम् बोद्धव्यं. न कारसम्बन्धं विना दोष नाम एव। अपि चान्तराया स्तुधा, यथा दानगतोऽन्तरायः १ लाभगतो-

कामो[१२] मिथ्यात्व[१३]मज्ञानं[१४] निद्रा[१५]चाविरति[१६]स्तथा ।
रागो[१७] द्वेष[१८] श्च नो दोषास्तेषा-मष्टादशा-प्य-मी ॥७३॥
(१)महानन्दो[१] ऽमृतं[२] सिद्धिः[३] कैवल्य[४]मपुनर्भवः[५] ।
शिवं[६] निःश्रेयसं[७] श्रेयो[८] निर्वाणं[९] ब्रह्म[१०] निर्वृतिः[११]॥७४
महोदयः[१२] सर्वदुःखक्षयो[१३] निर्वाण[१४]मक्षरम्[१५] ।
मुक्ति[१६] र्मोक्षो[१७] ऽपवर्गो[१८] ऽथ (२)मुमुक्षुः[१] श्रमणो[२]यतिः[३] ॥७५॥
वाचंयमो[४]व्रती[५]साधु[६]रनगार[७]ऋषि[८]र्मुनिः[९] ।
निर्ग्रन्थो[१०]भिक्षु[११]रस्य स्वं(३) तपो[१] योग[२]शमा[३]दयः ॥७६॥
मोक्षोपायो योगो[१] ज्ञानश्रद्धान-चरणात्मकः ।
(४)अभाषणं[१] पुनर्मौनं[२] गुरु[१] र्धर्मोपदेशकः[२](५) ॥७७॥
(६)अनुयोग[१]कृ-दाचार्य[२] (७)उपाध्याय[१]स्तु पाठकः[२] ।
(८)अनूचानः[१] प्रवचने साङ्गे ऽधीती गणि[२] श्च सः ॥७८॥
(९)शिष्यो[१] विनेयो[२]ऽन्तेवासी[३] शैक्षः[१] प्राथमकल्पिकः[२](१०) ।

ऽन्तरायः २ वीर्य्यगतोऽन्तरायः ३ भोगगतोऽन्तरायः ४। भोगः स्रगादिः। उपभोगगतोऽन्तरायश्च ५। उपभोगोऽङ्गनादिः ॥

(१) महानन्देत्यादयः प्रत्येकं मोक्षस्य नाम ॥
(२) मुनिनामानि वा मुमुक्षुनामानि ॥
(३) मुमुक्षु साधनाना मेकैकम् ॥
(४) मौनस्य नाम ॥ (५) गुरुनाम ॥
(६) द्वयं आचार्य्ये ॥ (७) एतौ उपाध्यायस्य ॥
(८) गुरुसकाशात्साङ्गसिद्धान्तमधीतवतो नाम्नि ॥
(९) शिष्यनामानि त्रीणि ॥
(१०) एतौ प्रथमशिक्षा ग्रहणयोग्यस्य ॥

(१)सतीर्थ्या[१]स्त्वे-कगुरवो[२] विवेकः[१] पृथगात्मता[२] ॥७-॥
एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः[१](२) ।
स्या त्पारम्पर्यमाम्नायः[२] सम्प्रदायो[४] गुरुक्रमः[२](३) ॥८०॥
(४)व्रतादानं[१] परिव्रज्या[२] तपस्या[३] नियमस्थितिः[४] ।
(५)अहिंसा[१] सूनृता[२]ऽस्तेय[३]ब्रह्मा[४]ऽकिञ्चनता[५] यमाः ॥८१॥
(६)नियमाः[१] शौच[१]सन्तोषौ[२] स्वाध्याय[३]तपसी[४] अपि ।
देवताप्रणिधानञ्[५]च करणं[१] पुन-रासनम्[२](७) ॥८२॥
प्राणायामः[१] प्राणयमः[२] श्वासप्रश्वासरोधनम्(८) ।
प्रत्याहार[१]स्त्विन्द्रियाणां विषयेभ्यः समाहृतिः(९) ॥८३॥
धारणा[१] तु क्वचि द्धेये चित्तस्य स्थिरबन्धनम्(१०) ।
ध्यानं[१] न्तु विषये तस्मिन्नेकप्रत्ययसन्ततिः(११) ॥८४॥
समाधि[१]स्तु तदे[२]वार्थमात्राभासनरूपकम् ।

(१) सतीर्थ्येति द्वयमेकगुरुने, विवेकेति द्वयं विवेक नाम्नि ॥
(२) सदृशाचार प्रवर्त्तकस्य नाम ॥
(३) पञ्च सम्प्रदाय नामानि ॥
(४) चत्वारि प्रव्रज्या नामानि, प्रव्रज्या सन्न्यासः ॥
(५) योगस्याष्टाङ्गानामेकैकं, तत्राहिंसादीनां पञ्चानां, यमात्मकम्
(६) पञ्च नियम नामानि ॥
(७ करेतिद्वयम् आसनस्य नाम ॥
(८) चत्वारि प्राणायाम नामानि ॥
(९) प्रत्याहारस्य लक्षणं नाम च ॥
(१०) धारणाया अपि लक्षणं नाम च ॥
(११) ध्यानस्यापि लक्षणं नाम च ॥

(१) एवं योगो[१] यमाद्यङ्गैरष्टभिः सम्मतोऽष्टधा ॥५॥

श्वःश्रेयसं[१] शुभं[२] शिवं[३] कल्याणं[४] श्वोवसीयसं[५] श्रेयः[६] ।
क्षेमं[७] भावुकं[८] भविकं[९] कुशलं[१०] मङ्गलं[११] भद्रं[१२] मद्रं[१३] शस्ता-
नि[१४] (२) ॥८७॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामभिधानचिन्तामणौ
नाममालायां देवाधिदेवकाण्डः प्रथमः ।



---

(१) समाधेरपि लक्षणम् ॥
(२) चतुर्दशकल्याणनामानि ॥

# ॥ देवकाण्डः ॥

द्वितीयः ।

स्वर्ग[1] स्त्रिविष्टपं[2](1) द्यौ[3]र्दिवौ[4]
भुवि[5] स्त्रविष[6]ताविषौ[7] नाकः[8]॥
गौ[9] स्त्रिदिव[10] मूर्द्ध्व लोकः[11]
सुरालय[12](2) स्तत्सद(3)[1]स्त्वमराः[2] ॥१॥
देवाः[3] सुपर्व्व[4]-सुर-[5]निर्ज्जर[6]-देवत[7]र्भु-
बर्हिर्मुखा[8]-ऽनिमिष[10]-दैवत-[11]नाकि[12]-लेखाः[13] ।
वृन्दारकाः[14] सुमनस[15] स्त्रिदशा[16] अमर्त्त्याः[17]
(4)स्वाहा-स्वधा-क्रतु-सुधा-भुज[21] आदितेयाः[22]॥२॥

(१) त्रिपिष्टपमिति वा पाठः, द्यौशब्दश्चतुर्थवर्ग तृतीयान्तस्यादि सयुक्तस्त्रयोदश-स्वरान्तः, रूपे गौशब्दवत् । दिव्शब्दो व्यञ्जनदन्तौष्ठ्यान्तः, एतस्यापि सौ द्यौरिति रूपम् । दिवौ दिवः - इत्यादि । अन्येतु अभिवाम्या इति विकल्पेन आत्वे द्यां दिवमित्याहुः । दिवमित्यकारान्तोऽपि कुलवत् प्रायेण वृत्तिविषयेऽस्य प्रयोगः, यथा "नकेवलं सद्मनि मागधोपतेः पथिव्य जृम्भन्त दिवौकसामिति ।' भुविः इसन्तः स्त्रीलिङ्गः भुविषौ भुविषः इत्यादीनि रूपाणि ।

(२) द्वादश स्वर्ग नामानि ।

(३) तस्मिन् स्वर्गे सीदन्तीति तत्सदः । स्वर्गसदः यौगिकत्वात् दिविषदः त्रिदिवौकसः द्युसद्मानः इत्यादयो योज्याः ।

(४) "स्वाहास्वधाक्रतुसुधाभ्योऽपिभुजः" तेन स्वाहाभुजः १ स्वधाभुजः २ क्रतुभुजः ३ सुधाभुजः ४ इति चत्वारि नामानि, अन्यान्यपि किन्तु यौगिकत्वात् स्वाहाशनाः स्वधाशनाः यज्ञाशनाः अमृतान्धसः इत्यादयो बोध्या ॥

गीर्व्वाणा[२३] मरुतो[२४]ऽस्वप्ना[२५] विबुधा[२६] दानवारयः[२७] (१)।
(२)तेषां यानं[१] विमानो[२]ऽन्धः (३)पीयूष[१]ममृतं[२] सुधा[३] (४)॥३॥
असुरा[१]नागा[२]स्तडितः[३]सुपर्णका[४]वह्नयो[५]ऽनिलाः[६]स्तनिताः[७]।
उदधि[८]-द्वीप[९]-दिशो[१०] दश[१]भवनाधीशाः[२]कुमारान्ताः (५)॥४॥
(६)स्युः पिशाचा[१] भूता[२] यक्षा[३] राक्षसाः[४] किन्नरा[५] अपि।
किम्पुरुषा[६] महोरगा[७] गन्धर्व्वा[८] व्यन्तरा[१] अमी ॥५॥
(७) ज्योतिष्काः[१] पञ्च चन्द्रा[१]ऽर्क्क[२]-ग्रह[३]-नक्षत्र[४]-तारकाः[५]।
(८)वैमानिकाः[१] पुनः कल्पभवा द्वादश ते त्व ऽमी ॥६॥

(९) सौधर्म्म[१]-शान[२]-सनत्कुमार[३]-
माहेन्द्र[४]-ब्रह्म[५]-लान्तक[६]-जाः ।
शुक्र[७]-सहस्रारा[८]-नत[९]-
प्राणत[१०]-जा आरणा[११]-ऽच्युत[१२]-जाः ॥७॥

कल्पातीता नव ग्रैवेयकाः[१] पञ्च त्व ऽनुत्तराः[१] ।

---

(१) सप्तविंशतिर्देव नामानि ।

(२) तेषां देवानां यानं देवयानमित्येकं नाम, अत्रापि यौगिकत्वात् सुरयानादयोऽपि ज्ञेयाः ।

(३) तेषां देवानामन्धोऽन्नम् देवान्धः, यौगिकत्वात् देवान्नं देवाहारः देवभोज्यमित्यादि ज्ञेयम् ॥ पेयूषमित्यपि पाठः ।

(४) जैनमते भवनपतीनाह---असुरादीनां दशानां भवनाधीशा इत्येकम् ॥ (५) कुमारशब्दोऽन्ते येषां ते कुमारान्ताः ॥

(६) पिशाचादीनामष्टानां व्यन्तरा इत्येकम् ॥

(७) चन्द्रादीनां पञ्चानां ज्योतिष्का इत्येकम् ॥

(८) द्वादश सौधर्म्मजादीनां वैमानिका इत्येकम् ॥

(९) सौधर्म्मादिभ्यः षड्भ्यो जा इति योज्यते, सौधर्म्मे कल्पे जाताः सौधर्म्मजा इत्यादि । तथा शुक्रादिभ्यः । आरणाच्युताभ्यां च ॥

निकायभेदाद्देवं स्युर्द्देवाः किल चतुर्विधाः ॥९॥

(१)आदित्यः[१] सविता[२]ऽर्यमा[३]
खर[४](२)सहस्रो[५]-ष्णांशु[६]रंशू[७]रवि[८]- ।
र्मार्तण्ड[९](३) स्तरणि[१०]र्गभस्ति[११]
ररुणो[१२] भानु[१३]र्नभो-ऽह-र्मणिः[१५](४) ।
सूर्यो[१६]ऽर्कः[१७] किरणो[१८] भगो[१९]
ग्रहपुषः[२०] पूषा[२१] पतङ्गः[२२] खगो[२३] ।
मार्तण्डो[२४] यमुना-कृतान्त[२५]-
जनकः[२६](५) प्रद्योतन[२७]स्तापनः[२८] ।
ब्रध्नो[२९]हंस[३०]श्चित्रभानु[३१]र्विवस्वा[३२]न्
सूर[३३]स्त्वष्टा[३४] द्वादशात्मा[३५] च हेलिः[३६] ।
मित्रो[३७] ध्वान्ताराति[३८]रब्जां-शु-हस्त[४०]-
श्चक्रा-ऽब्जा-(६)ह-र्बान्धवः[४३]सप्तसप्तिः[४४] ॥१०॥

---

(१) अदितेरपत्य मादित्य इदं कृदि ॥

(२) खरादिभ्योऽर्थेऽंशुः-खरांशुः सहस्रांशुः उष्णांशु, यौगिकत्वात् खररश्मिः तिग्मरश्मिः खरकिरणः दशशतरश्मिः उष्णांशुः शीतेतर-रश्मीत्यादयः ॥

(३) मृतमण्डमस्येति मृताण्डः, मृतमण्डमजायतेति श्रुतिः, तस्यापत्य मृष्यणि मार्त्तण्डः, मृतण्डस्यापत्यं मार्त्तण्डः कृपीत्यादिनाऽण् ॥

(४) नभस्य अह्नश्च नभोऽह्नी नभोऽह्नोभ्यां मणिः नभोहर्मणिः, नभोमणिः अहर्मणिरिति च ॥

(५) यमुनाजनकः कृतान्तजनकः ॥

(६) अब्जहस्तः अंशुहस्तः--चक्रादिभ्यो बान्धवः चक्रबान्धव इत्यादि ॥

(१)दिवा-हिमा-ऽह्-दिवस-प्रभा-विभा-

भासःकरः[५१] स्वार्मिहिरो[५२] विरोचनः[५३] ।

(२)ग्रहा-ऽब्जिनी-गो-द्यु-पति[५७] र्विकर्त्तनो[५८] ।

हरिः[५९] शुचिः[६०]-गोः[६१]-गगना ध्वजा[६२]-ऽध्वगो[६३(३)] ॥२१॥

हरिदश्वो[६४](४)जगत्कर्म्म-साक्षी[६५]भास्वान्[६७] विभावसुः[६८]

त्रयीतनु[६९] र्जगच्चक्षु[७०] स्तपनो[७१]ऽरुणसारथिः[७२(५)]॥१२

रोचि[१]-ऽरुस्[२]-रुचि[३]-शोचि[४]-रंशु[५]-गो[६]-

ज्योति[७]-ऽर्चि[८]-ऽरूपशु[९]-त्व-भीशवः[१०(६)] ।

प्रग्रहः[११]शुचि[१२]-मरीचि[१३]-दीप्तयो[१४]

धाम[१५]-केतु[१६]-घृणि[१७]-रश्मि[१८]-पृश्नयः[१९] ॥१३॥

पाद[२०]-दीधिति[२१]-कर[२२]-द्युति[२३]-द्युतो[२४]

ऽ-भ्विरोक[२६]-किरण[२७]-त्विषि[२८]-त्विषः[२९] ।

भाः[३०]-प्रभा[३१]-वसु[३२]-गभस्ति[३३]-भानवो[३४]

भा[३५] मयूख[३६]-महसी[३७] छवि[३८] र्विभा[३९]॥१४॥

(७)प्रकाश[१] स्तेज[२] उद्योत[३] आलोको[४] वर्च्च[५] आतपः[६] ।

मरीचिका[१]मृगतृष्णा[२]मण्डलं[१] तूपसूर्य्यकम्[२] ॥१५॥

परिधिः[३] परिवेष[४] श्च सूरसूत[१] स्तु काश्यपिः[२] ।

---

(१) दिवादिभ्यः करः, दिवाकर इत्यादि ॥

(२) ग्रहादिभ्यः पतिः, ग्रहपतिरित्यादि ॥

(३) गगनशब्दादग्रे ध्वजशब्दोऽध्वगशब्दश्च,गगणध्वजः गगनाध्वगः ॥

(४) जगत्साक्षी कर्म्मसाक्षी च ॥

(५) द्विसप्ततिरादित्य नामानि । अथ किरण नामानि ॥

(६) अभीषवः मूर्द्धन्ययुगपि ॥

(७) आतप नामानि ॥

अनूरु[३] र्विनतासूनु[४] रश्मणो[५] गरुड़ाग्रजः[६] ॥१६॥
रेवन्त[१] स्तु ऽर्केतोजः[२] प्लवगो[३] हयवाहनः[४] ।
दण्डादय माठराद्याः[१] सवितुः पारिपार्श्विकाः ॥१७॥

चन्द्रमाः[१]कुमुदबान्धवो[२] दश
श्वेतवाज्य[४](१)ऽमृतसू[५] तिथि-प्रणीः[६] ।
कौमुदी-कुमुदिनी-भ-दक्षजा-
रोहिणी-द्विज-निशौषधी-पतिः[१४] ॥१८॥
जैवातृको[१५]ऽब्ज[१६]श्च कला-शशि-ग्ला-
च्छाया[१९]-भ[२०]इन्दु[२१]र्विधुर[२२] स्तिहगुः[२३] ।
राजा[२४]निशो रत्न[२५(२)]-करौ[२६] च चन्द्रः[२७]-
सोमो[२८]ऽमृतश्वेत-हिम-द्युति[३१]-ग्लौः[३२(३)] ॥१९॥

षोडशो ऽशः कला[१] चिह्नं[१]लक्ष्मणं[२]लक्ष्म[३]लाञ्छनम्[४] ।
अङ्कः[५]कलङ्को[६]ऽभिज्ञानं[७(४)] चन्द्रिका[१]चन्द्रगोलिका[२]॥२०॥
चन्द्रातपः[३]कौमुदी[४] च ज्योत्स्ना[५(५)] बिम्बं[१]तु मण्डलम्[२] ।

---

(१) दशश्वेताश्वा यस्य वाजी, दशवाजी श्वेतवाजी ॥ कौमुद्यादि ज्योत्स्नायां पतिः, कौमुदीपतिरित्यादि । कलादिभ्योऽपरेऽप्ययं कला-भृदित्यादि ॥

(२) मासनिशात्मनस्यमादौ लब्धेत्यनेन आवलनिशाशब्दस्य प्रसादावाकारलोपे कर्मनिशः,ततोऽयमर्थः निशः आवन्त निशाशब्दादय रत्नकरौ शब्दौ योज्यौ । ततो निशारत्नम् "अजहल्लिङ्गोऽयम्" । निशा-करः। अमृत श्वेतहिमेभ्योऽपरे द्युतिः अमृतद्युतिः ॥

(३) द्वात्रिंशच्चन्द्र नामानि ॥

(४) एतानि सप्तचन्द्रस्य कलङ्क नामानि ।

(५) पञ्च ज्योत्स्ना नामानि,ततो द्वे चन्द्रमण्डले ॥

नक्षत्रं[१] तारका[२] तारा[३] ज्योतिषी[४] भ[५]मुडु[६]र्ग्रहः[७] ॥२१॥
धिष्ण्य[८]मृक्ष[९](१) मथाऽश्विन्य[१]श्विनी[२] दस्रदेवता[३]।
अश्वयुग्[४] वाजिनी[५](२) चाऽथ भरणी[१] यमदेवता[२] ॥२२॥
कृत्तिका[१] बहुला[२] चाऽग्निदेवा[३](३) ब्राह्मी[१] तु रोहिणी[२]।
मृगशीर्षं[१] मृगशिरो[२] ब्राह्मं[३] चान्द्रमसं[४] मृगः[५] ॥२३॥
इल्वला[१]स्तु मृगशिरःशिरःस्था पञ्चतारकाः।
आर्द्रा[१] तु कालिनी[२] रौद्री[३] पुनर्वसू[१](४) तु यामकौ[२] ॥२४॥
आदित्यौ[३] च पुष्य[१]स्तिष्यः[२] सिध्य[३]श्च गुरुदैवतः[४]।
सार्प्या[१]ऽश्लेषा[२] मघाः[१](५) पित्र्याः[२] फाल्गुनी[१] योनिदेवता[२] ॥२५॥
सा तूत्तराऽर्यमदेवा[२] हस्तः[१] सवितृदैवतः।
त्वाष्ट्री[१] चित्राऽनिली[१](६) स्वाति[२]र्विशाखे[१]न्द्राग्निदेवता[२] ॥२६॥
राधा[२]ऽनुराधा[१] तु मैत्री[२] ज्येष्ठै[१]न्द्री[२] मूल[१] माश्रपः[२]।
पूर्वाषाढा[१]ऽप्या[२]ऽथोत्तरा[१]षाढा वैश्वी[२] श्रवणः[१] पुनः ॥२७॥
हरिदेवः[२] श्रविष्ठा[१] तु धनिष्ठा[२] वसुदेवता[३]।
वारुणी[१] तु शतभिषा[२](७) अजा-ऽहिर्बुध्न[१]-देवताः[२] ॥२८॥

---

(१) नव नक्षत्र नामानि ॥ (२) पञ्च अश्विन्याम्, द्वे भरण्याम् ॥

(३) त्रीणि कृत्तिकायां, द्वे रोहिण्यां, पञ्च मृगशिरसि, त्रीणि आर्द्रायां, त्रीणि पुनर्वसु नक्षत्रे, चत्वारि पुष्यायां अत्र द्वय मश्लेषा नक्षत्रे, द्वे मघासु, द्वयं पूर्वफल्गुन्या उत्तर फाल्गुन्याश्च द्वयम्, एवमित्यादीनि विभागतो ज्ञेयानि ॥

(४) अत्र पुनर्वसू नित्यद्विवचनान्तः पुंलिङ्गः ॥

(५) मघाः इत्ययं स्त्रीलिङ्गो नित्य बहुवचनान्तः ॥

(६) अनिलीत्यत्र देवताप्रत्ययान्तत्वाद्वृद्धिः ॥

(७) अजदेवता १ पूर्वभाद्रपदा २ प्रौष्ठपदा ३ इति त्रीणि पूर्वा-

पूर्वोत्तराभद्रपदा[1(१)] द्वयः प्रोष्ठपदाश्च ताः ।
रेवती[1] तु पौष्णं[2] दाक्षायण्यः[1] सर्वाः[(२)] शशिप्रियाः[2] ॥२८॥
राशीनां मुदयो लग्नं[1] मेषप्रभृतय स्तु ते ।
आरो[1] वक्रो[2] लोहिताङ्गो[3] मङ्गलो[4]ऽङ्गारकः[5] कुजः[6] ॥३०॥
आषाढाभू[7]र्नवार्चि[8(३)] श्च बुधः[1] सौम्यः[2] प्रहर्षुलः[3] ।
ज्ञः[4] पञ्चार्चिः[5] श्रविष्ठाभूः[6] श्यामाङ्गो[7] रोहिणीसुतः[8(४)] ॥३१॥
बृहस्पतिः[1] सुराचार्यो[2] जीव[3] श्चित्रशिखण्डिजः[4] ।
वाचस्पति[5] र्द्वादशार्चिः[6] र्धिषणः[7] फाल्गुनीभवः[8] ॥३२॥
गीर्बृहत्योः[9]-पति[10] रुतथ्यानुजा[11]-ऽङ्गिरसौ[12] गुरुः[13(५)] ।
शुक्रो[1] मघाभवः[2] काव्य[3] उशना[4] भार्गवः[5] कविः[6] ॥३३॥
षोड़शार्चि[7] र्दैत्यगुरु[8] र्धिष्ण्यः[9(६)] शनैश्चरः[1] शनिः[2] ।
छायासुतो[3]ऽसितः[4] सौरिः[5] सप्तार्चि[6] रेवतीभवः[7] ॥३४॥
मन्दः[8] क्रोड़ो[9] नीलवासाः[10] स्वर्भानु[1] स्तु विधुन्तुदः[2] ।
तमो[3] राहुः[4] सैंहिकेयो[5] भरणीभू[6(७)] रथाऽहिकः[1] ॥३५॥
अश्लेषाभू[2] श्शिखी[3] केतु[4] र्ध्रुव[1] उत्तानपादजः[2(८)] ।

---

(भ)ाद्रपद नक्षत्रस्य, अहिर्बुध्न्यदेवता १ उत्तरभाद्रपदा २ प्रौष्ठपदा ३ इति (त्र)ीणि उत्तराभाद्रपदनक्षत्रस्य । भाद्रपदा इत्यपि ॥

(१) एकोनत्रय पूर्वोत्तरभाद्रपदयोः ॥

(२) सर्व्वा अश्विन्यादि देवत्यन्ता नामद्वय वाच्याः ॥

(३) एते शब्दा वर्त्तन्ते पक्षे ॥ (४) एते बुधपक्षे वर्त्तन्ते ॥

(५) त्रयोदश बृहस्पतौ ॥

(६) नव शुक्र नामानि, दश शनैश्चर नामानि ॥

(७) सप्त राहुपक्षे, चत्वारि केतुपक्षे ॥

(८) द्वयं ध्रुवे ॥

अगस्त्यो[१]ऽगस्तिः[२] पीताब्धि[३]र्वातापिद्विड्[४] घटोद्भवः[५] ॥३६॥
मैत्रावरुणि[६]राग्नेय[७] और्वशेया[८]ऽग्निमारुतौ[९] ।
(१)लोपामुद्रा[१] तु तद्भार्या कौषीतकी[२] वरप्रदा[३] ॥३७॥
मरीचिप्रमुखाः सप्तर्षय[१] श्चित्रशिखण्डिनः[२] ।
पुष्पदन्तौ[१] पुष्पवन्ता[२]वेकोक्त्या शशिभास्करौ ॥३८॥
राहुग्रासोऽर्केन्द्वो र्ग्रह[१] उपराग[२] उपप्लवः[३](२) ।
उपलिङ्गं[१] त्वरिष्टं[२] स्यादुपसर्ग[३] उपद्रवः ॥३९॥
अजन्य[५] मीति[६]रुत्पातो[७](३) वह्न्युत्पात[१] उपाहितः[२](४) ।
स्यात् कालः[१] समयो[२] दिष्टा[३]ऽनेहसौ[४] सर्वमूषकः[५](५) ॥४०॥
कालो द्विविधोऽवसर्पिण्युत्सर्पिणी[१] विभेदतः ।
सागर-कोटि-कोटीनां विंशत्या स समाप्यते ॥४१॥
अवसर्पिण्यां षडरा उत्सर्पिण्यां त एव विपरीताः ।
एवं द्वादशभि ररै-र्विवर्तते कालचक्रमिदम् ॥४२॥
(६)तत्रैकान्तसुषमा[१](७) ऽरश्चतस्रः-कोटिकोटयः ।
सागराणां सुषमा(८) तु तिस्रस्तत्कोटिकोटयः ॥४३॥

---

(२) नव नामानि अगस्त्यस्य । लोपेति त्रयं तद्भार्यायाः ॥
(४) उपेतित्रयं सूर्येन्दुग्रहणकाले पञ्चकाख्ये ॥
(५) उपेति सप्त सामान्यत उपद्रवे ॥
(६) अग्निजातोपद्रवस्य द्वयम् ॥
(७) पञ्च सामान्यतः काल नामानि ॥
(८) षड्रानाहृतिभिः [illegible], एतत् प्रथमारस्य ॥
(९) सुषमेति सर्व्वारस्य नाम बोध्यम् ॥
(१) द्वितीयारस्य ॥

(१)सुषमदुःषमा ते द्वे (२)दुःषमसुषमा[१] पुनः ।
सैका सहस्रैर्वर्षाणां द्विचत्वारिंशतोनिता ॥४४॥
(३)अथ दुःषमै[१]कविंशतिरब्दसहस्राणि तावती तु स्यात् ।
(४)एकान्तदुःषमा[१]पि ह्येतन्मानाः परेऽपि विपरीताः ॥४५॥
(५)प्रथमेऽरत्रये मर्त्यास्त्रि-द्वे-कपल्यजीविताः ।
त्रि-द्व्ये-क-गव्यूतोच्छ्राया स्त्रि-द्व्येकदिनभोजनाः ॥४६॥
कल्पद्रुफलसन्तुष्टाश्चतुर्थे त्वरके नराः ।
पूर्वकोट्यायुषः पञ्चधनुःशतसमुच्छ्रयाः ॥४७॥
पञ्चमे तु वर्षशतायुषः सप्तकरोच्छ्रयाः ।
षष्ठे पुनः षोडशाब्दायुषो हस्तसमुच्छ्रयाः ॥४८॥
एकान्तदुःखप्रचिता उत्सर्पिण्यामपीदृशाः ।
पश्चानुपूर्व्या विज्ञेया अरेषु किल षट्स्वपि ॥४९॥
अष्टादशनिमेषाः स्युः काष्ठा[१]काष्ठाद्वयं लवः[१] ।
कला[१] तैः पञ्चदशभिर्लेश[१]स्तद्द्वितयेन च ॥५०॥
क्षणा[१]स्तैः पञ्चदशभिः क्षणैः षड्भिश्च नाडिका[१] ।
सा धारिका[२] घटिका[२] च मुहूर्त्त[१]स्तद्द्वयेन च ॥५१॥
त्रिंशता तेऽहोरात्र[१](६)स्तत्राह[१]र्दिवसो[२]दिनम्[३] ।
दिवं[४] द्यु[५]र्वासरो[६]घस्रः[७] प्रभातं[१] स्यादहर्मुखम्[२](७) ॥५२॥

---

(१) तृतीयारस्य ॥
(२) चतुर्थारस्य, दुःषमेत्यपि अरस्य नाम इत्यपि बोद्धव्यम् ॥
(३) पञ्चमारस्य ॥    (४) षष्ठारस्य ।
(५) अराणां फलमाह ॥
(६) अहरिति सप्त दिन नामानि । प्रभातेति द्वयं प्रभातकाले ॥
(७) प्रातःकालो हि सूर्योदयादारभ्य घटिका षट्कं यावद्-

व्युष्टं[३] विभातं[४] प्रत्यूषं[५] कल्यं[६]-प्रत्युषसी[७] उषः[८] ।
काल्यं[९] मध्याह्नो[१] स्तु दिवामध्यं[२] मध्यन्दिनं[३] च सः(१) ॥५३॥
दिनावसानं[१] मुत्सूरो[२] विकालं[३] सबली[४] अपि ।
सायं[१](२) सन्ध्या[१]तु पितृसूः[२] स्त्रिसन्ध्य[१]तु-पर्वैणवम्[२] ॥५४॥
(३)श्राद्धकालं[१]स्तु कुतुपो[२]ऽष्टमो भागो दिनस्य यः ।
निशा[१]निशीथिनी[२]रात्रिः[३]शर्वरी[४]क्षणदा[५]क्षपा[६] ॥५५॥
त्रियामा[७]यामिनी[८]भौती[९]तमी[१०]तमा[११]विभावरी[१२] ।
रजनी[१३] वसतिः[१४]श्यामा[१५]वासतेयी[१६]तमस्विनी[१७] ॥५६॥
उषा[१८]दोषे[१९]न्दुकान्ता[२०](४)ऽथ तमिस्रा[१] दर्शयामिनी ।
ज्यौत्स्नी[१] तु पूर्णिमारात्रि र्गणरात्रो[१] निशागणः ॥५७॥
पक्षिणी[१] पक्षतुल्याभ्या मह्नोभ्यां वेष्टिता निशा ।
गर्भकं[१] रजनीद्वन्द्वं[१] प्रदोषो[१] यामिनीमुखम् ॥५८॥

---

वति यद्विष्णुपुराणे "लेखा प्रभृत्यथादित्ये त्रिमुहूर्त्तगतेऽत्र वै । प्रातस्तनं ततः कालो भागश्चाह्नः स पञ्चम" इति ॥

(१) त्रीणि मध्याह्न नामानि ।

(२) पञ्च सायंकाल नामानि, तत्र सन्ध्येति द्वयं दिवा रात्रिसन्धौ, त्रिसन्ध्यमिति प्रातर्मध्याह्नसायाह्नोपलक्षितकालविशेषेण ॥

(३) दिवसस्ययोऽष्टमो भागः स श्राद्धकालः कुतपश्च उच्यते इत्यर्थः, दिवसस्य हि पुराणोक्तानि रौद्रादीनि भगान्तानि पञ्चदशमुहूर्त्तानि, तन्मध्ये यो गणनाक्रमेण अष्टमो मुहूर्त्तः स कुतपो नाम उच्यते, तत्-प्रयोजनञ्च श्राद्धे अन्यकर्मणि च अष्टमो मुहूर्त्तः अभिजिदाख्य एव ॥

(४) विंशतिनामानि रात्रिसामान्यस्य, तत्र विशेषमाह तमिस्रे ति ॥

यामः[1] प्रहरो[2] निशीथ[1] स्त्वर्द्धरात्रो[2] महानिशा[3] ।
उच्चर[1] स्त्वपररात्र[2] स्तमिस्रं[1] तिमिरं[2] तमः[3] ॥५८॥
ध्वान्तं[4] भूच्छाया[5] ऽन्धकारं[6] तमसं[7] स-मवा-ऽन्धतः(१) ।
तुल्यनक्तन्दिने काले विषुवं[1] द्विषुवं[2] च तत् ॥६०॥
पञ्चदशा-ऽहोरात्रः स्यात् पक्षः[1] स बहुलो[1] ऽसितः ।
तिथिः[1] पुनः कर्म्मवाटी[2] ऽतिथि[1] स्तावदिः[2] समे ॥६१॥
पञ्चदश्यौ[1] यज्ञकालौ[2] पक्षान्तौ[3] पर्व्वणी[4] अपि(२) ।
तत्सन्धिमूलं भूतेष्टापञ्चदश्यो र्यदन्तरम् ॥६२॥
स पर्व्वसन्धिः[1] प्रतिपत्पञ्चदश्यो र्यदन्तरम् ।
पूर्णिमा[1] पौर्णमासी[2] सा राका[1] पूर्णे निशाकरे ॥६३॥
कलाहीने त्व ऽनुमति[1] र्मार्गशीर्ष्यौ[1] ऽग्रहायणी[2] ।
अमा[1] ऽमावस्या[2] ऽमावस्या[3] दर्शः[4] सूर्येन्दुसङ्गमः[5] ॥६४॥
अमावास्या[6] ऽमावासी[7] च सा नष्टेन्दु कुहूः[1] कुहः[2] ।
दृष्टेन्दु स्तु सिनीवाली[1] भूतेष्टा तु चतुर्द्दशी[2] ॥६५॥
पञ्चो मासो[1] वत्सरादि[1] र्मार्गशीर्षः[2] सहः सहाः[4](३) ।
आग्रहायणिक[5] श्चाथ पौष[1] स्तैषः[2] सहस्य[3] वत्(४) ॥६६॥

---

(१) सन्तमसं१ अवतमसं२ अन्धतमसं३ ॥

(२) चत्वारि अमावस्यायां पौर्णमास्याञ्च ॥

(३) पञ्च मार्गशीर्षनामानि, तत्र सहः अकारान्तोऽयं देववत्, सहाः व्यञ्जनदन्त्यान्तः पुंसि, सहसौ सहसः इत्यादीनि रूपाणि ॥

(४) त्रीणि पौषनामानि, सहस्यवत् यथा सहस्यः पौषस्तथा तैषोपीत्यर्थः ॥

(१)माघ[१]स्तपाः[२] फाल्गुन[१]स्तु फाल्गुनिक[२]स्तपस्य[३]वत्(२) ।
चैत्रो[१]मधु[२]श्चैत्रिक[३]श्च वैशाखे[१] राध[२]माधवौ[३] ॥६७॥
(३)ज्येष्ठ[१]स्तु शुक्रो[२]ऽथाऽषाढः[१](४)शुचिः[२]स्याच्छ्रावणो[१]नभाः[२]।
श्रावणिको[३] ऽथ नभस्यः[१] प्रौष्ठभाद्रपदः पदः[२] ॥६८॥
भाद्र[४]श्चाथाऽश्विने[१]स्त्वाऽश्वयुजे[२]-षा[३]ऽवथ कार्त्तिकः[१] ।
कार्त्तिकिको[२] बाहुलो[३] ऽर्जौ[४] द्वौ द्वौ मार्गादिका ऋतुः[१]॥ ६
हेमन्तः[१]प्रथलो[२]रौद्रो[३] ऽथ शैष[१] शिशिरौ[२] समौ ।
वसन्त[१] इष्यः[२] सुरभिः पुष्पकालो[४] बलाङ्गकः[५] ॥७०॥
उष्ण[१] उष्णागमो[२]ग्रीष्मो[३] निदाघ[४]स्तप[५](५) उष्मकः ।
वर्षा[१](६)स्तपात्ययः[२]प्रावृण्[३]मेघा(७)न्तकाला[४]-ऽगमौ[५]स्वरी[६]॥ ७१
शर[१]द्घनात्ययो[२] ऽयनं[१] शिशिराद्यै स्त्रिभिस्त्रिभिः ।
अयने द्वे गति रुद[१]ग्दक्षिणा[२] ऽर्कस्य वत्सरः ॥७२॥

---

(१) इयं माघ नामनि, तत्र तपाः व्यञ्जनदन्त्यान्तः ॥

(२) त्रीणि फाल्गुणे, त्रीणि चैत्रे, त्रीणि वैशाखे च ॥

(३) इयं ज्येष्ठमासे, ज्येष्ठ इत्यत्र ज्यैष्ठोऽपि, तन्महेश्वर आह, "ज्येष्ठे ज्यैष्ठोऽपि दृश्यते" इति तत्र ज्येष्ठया चन्द्रयुक्तया युक्ता पौर्णमासी ज्यैष्ठी "चन्द्रयुक्तात्काले" इत्यण् साऽस्त्यस्य ज्यैष्ठः मासः पौर्णमासीत्यण ॥

(४) इयमाषाढे, त्रयं श्रावणे, चत्वारि भाद्रे, त्रीण्याश्विने, चत्वारि कार्त्तिके च, तत्र प्रोष्ठेति प्रोष्ठपदो भाद्रपदश्च, आश्वयुजः अकारान्तो देववत् ।

(५) तपः अकारान्तो देव शब्दवत ॥

(६) वर्षाः नित्य बहुवचनान्तः स्त्रीलिङ्गः ॥

(७) मेघकालः १ मेघागमश्च २ ॥

(१)स¹सं²-प³-अनु⁴-इद्वत्सरो⁵ वर्षं⁶ हायनो⁷ऽब्दः⁸ समा⁹ शरत्¹⁰(२)

भवे त्पैत्रं¹ त्व ऽहोरात्रं मासेना ऽब्देन दैवतम् ॥७३॥

दैवे युगसहस्रे द्वे ब्राह्मं¹ कल्पौ तु ते नृणाम्(३) ।

मन्वन्तरं¹ तु दिव्यानां युगानामेकसप्ततिः ॥७४॥

कल्पो¹ युगान्तः² कल्पान्तः³ संहारः⁴ प्रलयः⁵ क्षयः⁶ ।

संवर्त्तः⁷ परिवर्त्त⁸श्च समसुप्ति⁹ र्जिहानकः¹⁰(४) ॥७५॥

तत्काल¹स्तु तदात्वं² स्या त्तज्जं सान्दृष्टिकं¹ फलम् ।

आयति¹स्तूत्तरः काल उदर्क¹स्तद्भवं फलम् ॥७६॥

व्योमा¹ऽन्तरिक्षं² गगनं³ घनाश्रयो⁴
विहाय⁵ आकाश⁶ मनन्त⁷ पुष्करे⁸ ।
अभ्रं⁹ सुरा-ऽभ्रो-ऽडु-मरु-त्पथो¹³(५) ऽम्बरं¹⁴
खं¹⁵ द्यो¹⁶ दिवौ¹⁷ विष्णुपदं¹⁸ वियत्¹⁹ नभः²⁰(६) ॥७७॥
नभ्राट्¹ तडित्वान्² मुदिरो³ घनाघनो⁴
ऽभ्रं⁵ धूमयोनि⁶ स्तनयित्नु⁷ मेघाः⁸ ।

---

(१) स इति वत्सरः, संवत्सरः१ परिवत्सरः२ अनुवत्सरः३ इद्वत्सरश्च४ ॥

(२) दश वत्सर नामानि, तत्र समाः स्त्रियां मासन्तो विकल्पेन बहुवचनान्तश्च ॥

(३) ते द्वे युगसहस्रे नृणां कल्पावित्यर्थो ॥

(४) दशप्रलय नामानि ॥

(५) सुरपथ १ अभ्रपथः२ उडुपथः३ मरुत्पथः४ ॥

(६) विंशत्याकाशनामानि ॥

जीमूत९-पर्ज्जन्या१०-भ्रवाहकाः११ घनो१२
धाराधरो१३ वाह१४-द१५-मु१६-ग्धरा१७ जलात्(१) ॥७८॥
कादम्बिनी१ मेघमाला(२) दुर्दिनं१ मेघजं तमः ।
आसारो१ वेगवान् वर्षो(३) वातास्तं वारि शीकरः१ ॥७९॥
वृष्ट्यां वर्षम्२ वर्षं तद्विघ्ने ग्राह-ग्रहौ२ ऽववात्(४) ।
घनोपल१ स्तु करकः२(५) काष्ठा ऽऽशा२ दिग्३ हरि४ त्ककुप्५(६)
(७)पूर्व्वा१ प्राची२ दक्षिणा१ ऽपाची२ प्रतीची१ तु पश्चिमा२ ।
अपरा३ऽथो त्तरो१दीची२ विदिक्१ त्व ऽपदिशं२ प्रदिक्३ ॥८१॥
दिश्यं दिग्भववस्त्वन्य ऽपाग१ ऽपाचीन२ उद गुदीचीनम्२ ।
प्राक्१ प्राचीनं२ च समे प्रत्यक्१ तु स्या त्प्रतीचीनम्२ ।८२॥
तिर्य्यग्दिशां तु पतय(८) इन्द्रा१-ग्नि२-यम३-नैर्ऋताः४ ।
वरुणो५ वायु६-कुबेरा७ वीशान८श्च यथाक्रमम् ॥८३॥
(९)ऐरावतः१ पुण्डरीको२ वामनः३ कुमुदो४ ऽञ्जनः५ ।
पुष्पदन्तः६ सार्व्वभौमः७ सुप्रतीक८श्च दिग्गजाः१ ।८४।

(१) दशमेघनामानि, अपि च, जलवाह१ जलदः२ जलमुग३ जलधरः४ यौगिकत्वात् वारिवाहः वारिद इत्यादयो योज्याः ॥

(२) द्वे नामनी मेघघटायाः ॥ (३) वातेनास्तं क्षिप्तम् ॥

(४) अवग्राहः अवग्रहः इति द्वे नामनी वृष्टिविघाते ॥

(५) त्रिलिङ्गः करकशब्द, वर्षोपल इत्यपि घनशब्द साहचर्यात् ॥

(६) काष्ठादिपञ्चकं सामान्यतो दिशि ।

(७) पूर्व्वादिद्वयं प्राच्यां, दक्षिणस्यां दक्षिणादिद्वयं, प्रतीच्यादित्रयं पश्चिमायां, उत्तरादिद्वयमुत्तरस्यां, यौतित्रयं मध्यवर्त्तिन्याम् ॥

(८) दिक्पालानामेकैकम् ॥

(९) दिग्गजानामेकैकम् ॥

इन्द्रो[1] हरि[2] र्दुश्च्यवनो[3] ऽच्युताग्रजो[4]
वज्री[5] बिडौजा[6] मघवान्[7] पुरन्दरः[8] ।
प्राचीनबर्हिः[9] पुरुहूत[10]-वासवौ[11]
संक्रन्दना[12] ऽऽखण्डल[13]-मेघवाहनाः[14] ॥८५॥
सुत्राम[15]-वास्तोष्पति-[16]वृत्रभि[17]-शक्रा[18]
वृषा[19] सुनासीर[20]-सहस्रनेत्रौ[21] ।
पर्जन्य[22]-हर्य्यश्व[23]-ऋभुक्षि[24]-बाह्ल-
दन्तेय[25] वृद्धश्रवस[26] स्तुराषाट्[27] ॥८
सुरर्षभ[28] स्तपस्तक्षो[29] जिष्णु[30] र्वरशतक्रतुः[31](1) ।
कौशिकः[33] पूर्वदिग्-देवा-ऽमरः-स्वर्ग-शची-पतिः[38](2) ॥
ऋतधामा[39] उग्रधन्वा[40] मरुत्वा[41]न्मघवा[42] ऽस्य तु(3) ।
(3)द्विषः पाको[1] ऽद्र्यो[2] वृत्रः[3] पुलोमा[4] नमुचि[5] र्बलः[6] ॥८८॥
जम्भः[7] प्रिया शची[1] न्द्राणी[2] पौलोमी[3] जयवाहिनी[4] ।
तनय स्तु जयन्तः[1] स्या ज्जयदत्तो[2] जय[3] श्च सः ॥८९॥
सुता जयन्ती[1] तविषी[2] ताविष्यु-च्चैःश्रवा[1] हयः ।
मातलिः[1] सारथि र्देवनन्दी[1] द्वाःस्थो गजः पुनः ॥९०॥
ऐरावणो[1] ऽभ्रमातङ्ग[2] श्चतुर्दन्तो[3] ऽर्कसोदरः[4] ।
ऐरावतो[5] हस्तिमल्ल[6] श्वेतगजो[7] ऽभ्रमुप्रियः ॥९१॥
वैजयन्तौ[1] तु प्रासाद-ध्वजौ पुर्य्य मरावती[1] ।

(१) वरक्रतुः १ शतक्रतुः २ ॥

(२) पूर्वदिक्पतिः १ देवपतिः २ अमरःपतिः ३ स्वर्गपतिः ४ शचीपतिः ५ ॥

(३) इन्द्रद्विषामेकैकम् ।

सरो नन्दीसरः[१] पर्षत्सुधर्मा[१] नन्दनं[१] वनम् ॥९२॥
वृक्षाः(१) कल्पः[१] पारिजातो[२] मन्दारो[३] हरिचन्दनः[४] ।
सन्तानश्[५]च(२) धनुर्देवायुधं[१] तदृजु रोहितम्[१] ॥९३॥
दीर्घं त्वैरावतं[१] वज्रं[१] त्वशनि[२] र्ह्रादिनी[३] स्वरुः[४] ।
शतकोटिः[५] पविः[६] शम्बो[७] दम्भोलि[८] र्भिदुरं[९] भिदुः[१०] ॥९४॥
व्याधामः[११] कुलिशो[१२]ऽस्या स्त्रि रतिभीः[२] स्वर्वैद्यु[२] र्ध्वंगिः ।
स्वर्वैद्या वश्विनी(३) पुत्रा[२]वश्विनौ[३] वडवासुतौ[४] ॥९५॥
नासिक्यौ[५] नक्रजौ[६] दस्रौ[७] नासत्या[८] वब्धिजौ[९] यमौ[१०] ।
विश्वकर्मा पुनस्त्वष्टा[२] विश्वकृत्[३] देववर्द्धकिः[४] ॥
(४)स्व-स्वर्गि-वध्वो[२]ऽप्सरस[१] स्स्वर्वेश्या[४] उर्वशीमुखाः ।
(५)हाहाद्यास्तु गन्धर्वा गान्धर्वा[२] देवगायनाः ॥

यमः कृतान्तः[२] पितृ-दक्षिणाशा-
प्रेतात्पति[५](६) र्दण्डधरो[६]ऽर्कसूनुः[७] ।
कीनाश[८]-मृत्यू[९] समवर्त्ति[१०]-कालौ
शीर्णाङ्घ्रि[२]-हर्य्य[३]-ऽन्तक[४]-धर्मराजाः ॥९८॥

---

(१) इन्द्रवृक्षाणामेकैकम् ।

(२) इन्द्रस्य धनुषो नामैकं देवायुधमिति, मेघप्रतिफलिता हि सूर्य्य-रश्मयो धनुराकारेण दृश्यन्ते इति क्षीरस्वामी ॥ तदिति ऋजु अवक्रं सरलमित्यर्थः तस्य नामैकं रोहितमिति इदं तूत्पादे भवति ॥

(३) अश्वौ विद्यतेऽनयोरित्यश्विनौ सदाश्वाधिरूढा वित्यर्थः, इत्-प्रत्ययान्तोऽयम् । नित्य द्विवचनान्तस्य एते पुंसि ॥

(४) स्वर्वध्वः १ स्वर्गिवध्वः ॥

(५) उर्वश्याद्या इत्यर्थः ॥

(६) पितृपतिः १ दक्षिणाशापतिः २ प्रेतपतिः ३ ।

यमराजः[१६] श्राद्धदेवः[१७] शमनो[१८] महिषध्वजः[१९]।

कालिन्दीसोदरश्[२०]चापि धूमोर्णा तस्य वल्लभा ॥९९॥

पुरी पुनः संयमनी[१(१)] प्रतीहारस्तु वैध्यतः[१]।

दासौ चण्ड[१]-महाचण्डौ[२] चित्रगुप्तस्तु लेखकः ॥१००॥

स्याद्राक्षसः[१] पुण्यजनो[२] नैरृतो[३]

(३)यातु[४] रक्षः[५] कौणप[६] यातुधानो[७]

रात्रिञ्चरो[८] रात्रिचरः[९] पलादः[१०]

कीनाश[११] रक्षो[१२] निकषात्मजा[१३]श्च ॥१०१॥

(४)क्रव्या[१४]त्कर्बुर[१५] नैरृता[१६] वरूपो[१७]

वरुण[१]स्त्वर्णवमन्दिरः[२] प्रचेताः[३]।

जल-यादः-पति[४](५)-पाशि[६]-मेघनादा[७]

जलकान्तारः[८] स्यात्परञ्जन[९]श्च ॥१०२॥

श्रीदः[१] सितोदर[२]-कुहे[३]-धनरक्षः[४] पिशाचकी[५]

च्छावसु[६]स्त्रिशिर[७]-ऐलविलै[८]कपिङ्गाः[९]।

पौलस्त्य[१०]-वैश्रवण[११]-रत्नकराः[१२] कुबेर[१३]-

यक्षौ[१४] नृधर्म[१५]-धनदौ[१६] नरवाहन[१७]श्च ॥१०३॥

कैलासौ[१८] यक्ष-धन-निधि-किम्पुरुषे-श्वरः[२२](६)।

---

(१) संयमनी इति परे पठन्ति।

(२) यमदासयोरेवैषाम् ॥

(३) यातु यातुनी यातूनि, पुंस्यपि सदाह धनपालः, क्रव्यादा यातुधो यातुधाना इति ॥ क्रव्यात् क्रव्यादौ क्रव्यादः

(४) निकषामूर्द्धन्योपि ॥

(५) जलपतिः। यादःपतिरित्यादि ॥

(६) यक्षेश्वर। धनेश्वरः२ निधीश्वरः३ किम्पुरुषेश्वरः प्रभृतयः ॥

विमानं पुष्पकं[1] चैत्ररथं[1] वनं पुरी प्रभा[1] ॥१०६॥
अलका[2] वस्वोकसारा[3] सुतोऽस्य नलकूबरः[1] ।
वित्तं[1] रिक्थं[2] स्वापतेयं[3] राः[4] सारं[5(1)] विभवो[6]
द्युम्नं[8] द्रव्यं[9] पृक्थं[10] ऋक्थं[11] स्व[12]मृक्णं[13] द्रविणं[14] धनम्[15]
हिरण्या[16]-र्थौ[17] निधानं[1] तु कुनाभिः[2] शेवधि[3]र्निधिः[4(2)] ॥
महापद्म[1]श्च पद्म[2]श्च[(3)] शङ्खो[3] मकर[4]-कच्छपौ[5] ।
मुकुन्द[6]-कुन्द[7]-नीला[8] खर्वो[9]श्च निधयो नव[(4)] ॥१०७॥
यक्षः[1] पुण्यजनो[2] राजा[3] गुह्यको[4] वटवास्य[5]पि ।
किन्नर[1]स्तु किम्पुरुष[2]स्तुरङ्गवदनो[3] मयुः[4] ॥१०८॥

शम्भुः[1] शर्वः[2] स्थाणु[3]रीशान[4] ईशो[5]
रुद्रो[6]-ड्डीशौ[7] वामदेवो[8] वृषाङ्कः[9] ।
कण्ठेकालः[10] शङ्करो[11] नीलकण्ठः[12]
श्रीकण्ठो[13]-ग्रौ[14] धूर्जटि[15]र्भीम[16]-भर्गौ[17] ॥१०९॥
मृत्युञ्जयः[18] पञ्चमुखो[19]ऽष्टमूर्त्तिः[20]
श्मशानवेश्मा[21] गिरिशो[22] गिरीशः[23] ।
मृडः[24] कपर्दी[25]श्वर[26] ऊर्द्ध्वलिङ्ग[27]
एक-त्रि-दृक्[28(5)] भालदृगो[30] कपाली[31] ॥११०॥

---

(१) पुंस्यपि यदाह धनपालः "सारोऽस्त्रीष्विद्रविणं धनम्" ।
(२) निधीनामेकैकम् ।
(२) निधिः शेवधिरस्त्रियामिति वाचस्पतिः ॥
(३) पद्मोऽस्त्रियामिति वाचस्पतिः ॥
(४) खर्वः खर्वसौ रत्नं । इत्येवं रूपाणि ।
(५) एकदृक् त्रिदृक् इत्यादि ॥

मृडो[३२] ऽट्टहासी[३३] घनवाहनो[३४] ऽहि-
र्बुध्नो[३५] विरूपाक्ष[३६] विषान्तकौ[३७] च ।
महाव्रती[३८] वह्नि-हिरण्य-रेताः[४०(१)]
शिवो[४१] ऽस्थिधन्वा[४२] पुरुषास्थिमाली[४३] ॥१११॥
स्याद् व्योमकेशः[४४] शिपिविष्ट[४५]-भैरवौ[४६]
दिक्-कृत्ति-वासा[४८(२)] भव[४९]-नीललोहितौ[५०] ।
सर्वज्ञ[५१]-नाट्यप्रिय[५२]-खण्डपर्शवो[५३]
महा-पुरा-देव[५४]-नटेश्वरा[५६] हरः[५७(३)] ॥११२॥
)पशु-प्रमथ-भूतो-मा-पतिः[६१] पिङ्ग-जटे[६२]क्षणः[६३] ।
नाक-शूल-खट्वाङ्ग-गङ्गा-ऽही-न्दु-कपाल-भृत्[७०] ॥११३॥
)गज-पूष-पुरा-नङ्ग-काला-न्धक-मखा-सुहृत् ।
पर्दो[१] ऽस्य जटाजूटः खट्वाङ्ग[१] सु[(६)] सुखं सुनः[२] ॥११४॥
पिनाकं[१] स्यादाजगवं[२] अजकावं[३] च तद्धनुः ।
ब्राह्म्याद्या मातरः[१] सप्त प्रमथाः[१] पार्षदा[२] गणाः[३] ॥११५॥

---

(१) वह्निरेताः हिरण्यरेता इति ।

(२) दिग्वासाः१ कृत्तिवासाः२ ।

(३) महादेवः१ महानटः२ महेश्वरः३ ॥

(४) पशुपतिः१; अत्र पशुशब्देन सुरनरतिर्यञ्चो गृह्यन्ते, "आब्र-ह्मान्तं लोकाः पशव" इति स्मृतेः । प्रमथपतिः२ भूतपतिः३, भूतशब्दो रुद्रानुचरपर्यायः । उमापतिः४ । पिङ्गजटः१ पिङ्गेक्षणः२ । पिनाक-भृत्१ शूलभृत्२ खट्वाङ्गभृत्३ गङ्गाभृत्४ अहिभृत्५ इन्दुभृत्६ कपा-लभृत्७ ॥

(५) गजादिभ्यः सप्तभ्योऽप्यसुहृत्, गजासुहृदित्यादि ।

(१)लघिमा[१] वशिते[२]शित्वं[३] प्राकाम्यं[४] महिमा[५] ऽणिमा[६] ।
यत्रकामावसायित्वं[७] प्राप्तिर[८]ैश्वर्य्य[१] मष्टधा ॥११६॥

गौरी[१] काली[२] पार्वती[३] मातृमाता[४]
ऽपर्णा[५] रुद्राण्य[६]म्बिका[७] त्र्यम्बको[८]मा[९] ।
दुर्गा[१०] चण्डी[११] सिंहयाना[१२] मृडानी[१३]
कात्यायनी[१४] दक्षजा[१५] ऽर्या[१६] कुमारी[१७] ॥११७॥

सती[१८] शिवा[१९] महादेवी[२०] शर्वाणी[२१] सर्वमङ्गला[२२] ।
भवानी[२३] कृष्णा(२४)-मैनाक-स्वसा[२५] मेनाद्रिजे[२७]-श्वरा[२८](३) ॥११८॥
निशुम्भ-शुम्भ-महिषमथनी[२९](४) भूतनायिका[३२] ।
तस्याः सिंहो मनस्तालः[१] सख्यौ तु विजया[१] जया[२](५) ॥११९॥
चामुण्डा[१] चर्चिका[२] चर्ममुण्डा[३] मार्जारकर्णिका[४] ।
कर्णमोटी[५] महागन्धा[६] भैरवी[७] च कपालिनी[८] ॥१२०॥
हेरम्बो[१] गण-विघ्ने-शः[२](६) पर्शुपाणि[४] र्विनायकः[५] ।
द्वैमातुरो[६] गजास्यै[७] कदन्तौ[८] लम्बोदरा[९]-ऽऽखुगौ(७) ॥१२१॥
स्कन्दः[१] स्वामी[२] महासेनः[३] सेनानीः[४] शिखिवाहनः[५] ।
षाण्मातुरो[६] ब्रह्मचारी[७] गङ्गो-मा-कृत्तिका-सुतः[१०](८) ॥१२२॥

---

(१) ऐश्वर्य्याण्येकैकम् ॥

(२) कृष्णस्वसा, मैनाकस्वसा इत्येवम् ।

(३) मेनाजा१ अद्रिजा२ ईश्वरा चावन्तो गम्भ्रादद् यदप्रत्ययान्तत्वात्, ईश्वरीति तु गौरादि ङित्त्वात्, यथयोमाह्वाङ्गी प्रत्यतामत्वादीवत् ॥

(४) निशुम्भमथनी१ शुम्भमथनी२ महिषमथनी३ ॥

(५) गौरीसख्योरेकैकम् ॥

(६) गणेशः१ विघ्नेशः इत्येवम् ॥

(७) दशगणेश नामानि ॥

(८) एतानि पूर्वपदानि ॥

कालनेमि[६]-हयग्रीव[७]-शकटा[८]-रिष्ट[९]-कैटभाः[१०] ।
कंस[११]-केशि[१२]-मुराः[१३] साल्व[१४]-मैन्द[१५]-द्विविद[१६]-राहवः[१७] ॥
हिरण्यकशिपु[१८]र्बाणः[१९] कालियो[२०] नरको[२१] बलिः[२२] ।
शिशुपाल[२३]श्चा खगश्चा वैनतेय[१]स्तु वाहनम् ॥१२५॥
शङ्खो ऽस्य पाञ्चजन्यो[१] ऽङ्कः श्रीवत्सो[१(१)] ऽसिस्तु नन्दकः[१] ।
गदा कौमोदकी[१] चापं शार्ङ्गं[१] चक्रं सुदर्शनम्(२) ॥१२६॥
मणिः स्यमन्तको[२] हस्ते भुजमध्ये तु कौस्तुभः[१(३)] ।
वसुदेवो[१] भूकश्यपो[२] दुन्दुरा[३]नकदुन्दुभिः ॥१२७॥

रामो[१] हली[२]-मुसलि[३]-सात्वत[४]-कामपालाः[५]
सङ्कर्षणः[६] प्रियमधु[७]र्बल[८]-रौहिणेयौ[९] ।
(४)रुक्मिप्रलम्बयमुनाभि[२]दनन्त[३]-ताल
लक्ष्मा[४]-ककुण्डल[५]-सितासित[६]-रेवतीशाः[७] ॥१२८॥

बलदेवो[८] बलभद्रो[९] नीलवस्त्रो[१०] ऽच्युताग्रजः[२] ।
मुसलं त्वस्य सौनन्दं हलं संवर्त्तकाह्वयम्(५) ॥१२९॥
लक्ष्मीः पद्मा[२] रमा[३] या[४] मा[५] ता[७] सा[८] श्रीः[९(६)] कमलेन्दिरा ।

---

(१) श्रीवत्सस्तु विष्णुहृदये रोमशो दक्षिणावर्तः ॥
(२) वाचस्पतिस्तु "चक्रं सुदर्शनो, स्त्रियाम्" इत्याह ॥
(३) भुजमध्ये वक्षसि ॥
(४) रुक्मिभित् प्रलम्बभित्२ यमुनाभित्३ ॥
(५) संवर्त्तकं क्लीबे ।
(६) -या इत्यस्य, इ, आ, इति छेदः, इ, चात्र चकाराद्योमादिरिति द्वौ

सौपर्णेयो[5] वैनतेयः[6] सुपर्णः[7]

सर्पाराति[8] र्वज्रजि[9] द्रुक्मतुण्डः[10] ।

पक्षिस्वामी[11] काश्यपिः[12] स्वर्णकाय[13]

स्तार्क्ष्यः[14] कामायु[15] र्गरुत्मान्[16] सुधाहृत्[17] ॥१४५॥

बुद्ध[1] स्तु सुगतो[2] धर्म्मधातु[3] स्त्रिकालवि[4] ज्जिनः[5] ।

बोधिसत्त्वो[6] महाबोधि[7] रार्य्यः[8] शास्ता[9] तथागतः[10] ॥१४६॥

पञ्चज्ञानः[11] षडभिज्ञो[12] दशार्हो[13] दशभूमिगः[14] ।

चतुस्त्रिंशज्जातकज्ञो[15] दशपारमिताधरः[16] ॥१४७॥

द्वादशाक्षो[17] दशबल[18] स्त्रिकायः[19] श्रीघना[20]-द्वयौ[21] ।

समन्तभद्रः[22] सङ्गुप्तो[23] दयाकूर्च्चो[24] विनायकः[25] ॥१४८॥

(1)मार-लोक-स्व-जि[28] द्धर्म्मराजो[29] विज्ञानमातृकः[30] ।

महामैत्रो[31] मुनीन्द्र[32] श्च बुद्धाः(2) स्युः सप्त तेत्वमी ॥१४९॥

(3)विपश्यी[1] शिखी[2] विश्वभूः[3] क्रकुच्छन्द[4] श्च काञ्चनः[5] ।

काश्यप[6] श्च सप्तम स्तु शाक्यसिंहो[1] ऽर्कबान्धवः[2] ॥१५०॥

तथा राहुलसू[3] स्सर्व्वार्थसिद्धो[4] गौतमान्वयः[5] ।

माया-शुद्धोदन-सुतो[7] देवदत्ताग्रज[8] श्च सः(4) ॥१५१॥

(5)असुरा[1] दिति-दनु-जाः[3] पातालौकः[4]-सुरारयः[5] ।

पूर्व्वदेवाः[6] शुक्रशिष्या[7] विद्यादेव्य स्तु षोडश(6) ॥१५२॥

---

(1) मारजित्१ लोकजित्२ स्वजित् इति ।

(2) द्वात्रिंशद् सामान्यतो बुद्धनामानि ॥

(3) विपश्यीदसिखवत्, एतानि तद्भेदान्येव षट् ॥

(4) सप्तमशाक्यसिंह बुद्धविशेषस्य नामान्यष्टौ ॥

(5) दितिजाः१ दनुजाः२ इति ॥

(6) विद्यादेवीनामैकैकम् । रोहिणी च प्रज्ञप्तिश्चेति इतस्ते द्विवचनान्तं, न चात्र प्रज्ञप्तिशब्दो ङ्यन्तो नदीवदिति भणितव्यम्, शक्ति-

रोहिणी[1]-प्रज्ञप्ती[2] वज्रशृङ्खला[3] कुलिशाङ्कुशा[4] ।
चक्रेश्वरी[5] नरदत्ता[6] काल्य[7] था ऽसौ महापरा[8 1)] ॥१५३॥
गौरी[9] गान्धारी[10] सर्वास्त्रमहाज्वाला[11] च मानवी[12] ।
वैरोट्या[13] ऽच्छुप्ता[14] मानसी[15] महामानसिके[16] तिताः॥१५४॥
वाग् ब्राह्मी[2] भारती[3] गौ[4]र्गी[5] र्वाणी[6] भाषा[7] सरस्वती[8]
श्रुतदेवी[9] वचनं[1] तु व्याहारो[2] भाषितं[3] वचः[4] ॥१५५॥
(२)सविशेषण माख्यातं वाक्यं[1] स्यााद्यन्तकं पदम्[1] ।
राद्ध-सिद्ध-कृतेभ्योऽन्त[(3)] आप्तोक्तिः[4] समया[5] ऽगमौ[6(4)]॥१५६॥
(५)आचाराङ्गं[1] सूत्रकृतं[2] स्थानाङ्गं[3] समवाय[4]-युक् ।
पञ्चमं भगवत्यङ्गं[5] ज्ञाता धर्मकथा[6] ऽपि च ॥१५७॥

---

केतिजूतिसातिहेतिकीर्तयश्च इत्यनेन सूत्रेण क्तिः प्रत्ययेन निपातितत्वात्, पाणि-निमतक्तिः प्रत्यये नितां स्त्रश्च इतीत्वं बाधितत्वात्, क्तिः प्रत्ययस्य इतो-ऽक्त्यर्थादिति सूत्रेण ङी प्रत्ययस्य निषेधनात् ॥

(१) महाकाली इत्येवम् ॥

(२) प्रयुज्यमानस्त्याताऽप्रयुज्यमानाख्यातयो नामैकं वाक्यम् । स्याद्यन्तं पदं सामान्यत आख्यातं कथ्यते, यदनेकार्थः "आख्यातं भाषिते-त्यादौ" त्यादि स्याद्यन्तं पदमिति तट्टीका, तदाख्यातं प्रयुज्यमानमप्रयुज्य-मानं वा सविशेषणं प्रयुज्यमानैरप्रयुज्यमानैर्वा कर्त्रादिभिर्विशेषणैः सहितं वाक्यमुच्यते इति शेषः, प्रयुज्यमान माख्यातं यथा धर्मो वो रक्षतु, अप्रयुज्यमानाख्यातं यथा शीलं तेजस्वम्, अस्तीति गम्यते तिङ् सुबन्तचयो वाक्यमित्यमरः सुबन्तिङ् सी सावादी येषान्ते स्यादयः आदिशब्दः प्रत्येकं योज्यते, तेन स्यादयः सुमबन्ताः त्यादयः आमहि-पर्यन्ता स्तदन्ते, यस्य तत् स्याद्यन्तकम् तस्य नामैकं पदमिति ॥

(३) राद्धान्तः १ सिद्धान्तः २ कृतान्त इति ॥

(४) सामान्यतः सिद्धान्त-शास्त्रनामानि षट् ॥

(५) 'अङ्गानामेकैकम् ॥

(७)उपासका-ऽन्तकृ-दनुत्तरोपपातिका दशाः[९] ।
प्रश्नव्याकरणं[१०] चैव विपाकश्रुत[११] मेव च ॥१५८॥
(१)इत्येकादश सोपाङ्गान्य ङ्गानि[१] द्वादशं पुनः(२) ।
दृष्टिवादो[२] द्वादशाङ्गी[१] स्या द्गणिपिटका[२] तया(३) ॥१५९॥
(४)परिकर्म्म[१]-सूत्र[२]-पूर्व्वानुयोग[३]-पूर्व्वगत[४]-चूलिकाः[५] पञ्च ।
स्यु र्दृष्टिवादभेदाः पूर्व्वाणि[१] (५)चतुर्दशापि पूर्व्वगते ॥१६०॥
(६)उत्पाद[१] पूर्व्व मग्रायणीय[२] मथ वीर्य्यतः प्रवादं[८] स्यात्(७)
अस्ति ज्ञान सत्या त्मनः कर्म्मणश्च परम् ॥१६१॥
प्रत्याख्यानं[९] विद्याप्रवाद[१०]-कल्याण[११]-नामधेये च ।
प्राणावायं[१२] च क्रियाविशाल[१३] मथ लोकबिन्दुसार[१४]मिति॥
स्वाध्यायः[१] श्रुति[२] राम्नाय[३] श्छन्दो[४] वेद[५] स्त्रयी[१] पुनः ।
ऋग्यजुः सामवेदाः स्यु रथर्व्वा तु तदुद्धृतिः ॥१६२॥

---

(१) उपासकाश्च अन्तकृतश्च अनुत्तरोपपातिकाश्चेति समाहारद्वन्द्वः, तस्मात् दशा इति प्रत्येकं योज्यते, तेन उपासकदशाः१अन्तकृद्दशाः२अनुत्तरोपपातिकदशाः३इति, एषां त्रयाणां ग्रन्थानां नाम बहुवचनान्तम्॥

(२) इत्येकादशप्रवचनपुरुषस्य अङ्गानी वाङ्गानि, किंभूतानि ! सह उपाङ्गैरौपपातिकादिभि र्द्वादशभि र्वर्त्तन्ते यानि तानि सोपाङ्गानि ॥

(३) द्वादशाङ्गस्य ॥　　(४) द्वादशाङ्गाः ॥

(५) दृष्टिवादभेदानामेकैकम् ॥

(६) वक्ष्यमाणानि चतुर्द्दश पूर्व्वगते पूर्व्वाणीत्युच्यन्ते ॥

(७) पूर्व्वदृष्टिवादभेदानामेकैकम् ॥

(८) वीर्य्यतः वीर्य्यशब्दात् प्रवादं वीर्य्यप्रवादम्३ तदिति प्रवादमस्त्यादिभ्यः परं योज्यम् 'अस्तीति नास्तेरप्युपलक्षणम् ततः अस्तिनास्तिप्रवादम्४ ज्ञानप्रवादम्५ सत्यप्रवादम्६ आत्मप्रवादम्७ कर्मप्रवादम्८ प्रत्याख्यानप्रवादम्९ ॥

वेदान्तः[1] स्या दुपनिषदो[2] ङ्कार[1]-प्रणवौ[2] समौ ।

(१)शिक्षा[1] कल्पो[2] व्याकरणं[1] छन्दो[4]-ज्योति[4]-र्निरुक्तयः[2] ॥

षडङ्गानि[1] धर्मशास्त्रं[1] स्यात् स्मृति[2] र्धर्मसंहिता[2] ।

आन्वीक्षिकी[1] तर्कविद्या[2] मीमांसा[1] तु विचारणा[2] ॥२६५॥

सर्गं[1] श्च प्रतिसर्ग[2] श्च वंशो[2] मन्वन्तराणि च[4] ।

वंशानुवंशचरितं[4] पुराणं[1] पञ्चलक्षणम् ॥२६६॥

षडङ्गी[6] वेदा श्चत्वारो[4] मीमांसा[1] ऽन्वीक्षिकी[1] तथा ।

धर्मशास्त्रं[1] पुराणं[1] च विद्या एता श्चतुर्दश ॥२६७॥

(२)सूत्रं[1] सूचनकृ द्भाष्यं[1] सूत्रोक्तार्थ प्रपञ्चकम् ।

प्रस्ताव[1] स्तु प्रकरणं[2] (३)निरुक्तं[1] पदभञ्जनम् ॥२६८॥

अवान्तरप्रकरणविश्रामे[(४)] शीघ्रपाठतः ।

आह्निक[1] मधिकरणं[1] (५)मेकन्यायोपपादनम् ॥२६९॥

उक्तानुक्तदुरुक्तार्थचिन्ताकारि तु वार्त्तिकम्[1(६)] ।

---

(१). एकैकं तत्तस्याङ्गमेयम् ॥

(२) सूत्रं क्लीबे, पुंस्यपीति कश्चित् ॥

(३) "शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरस्थितम् आहुः । प्रक नाम शास्त्रभेदं विपश्चितः" ॥

(४) अवान्तरप्रकरणानां विश्रामो ग्रन्थावयव इत्यर्थः, तदाह्नि मित्युच्यते यदनेकार्थः "आह्निकं स्यात् पुनरह्निर्वर्त्ये नित्यकर्मणि । ग्रन्थभागे चेति" ग्रन्थभागे ग्रन्थावयवे इति तट्टीका।

(५) एकं न्याय मुपपादतीति अधिकार इति यावत्, तत्र म अधिकरणमिति ॥

(७) उक्तानामनुक्तानां दुरुक्तानां चार्थानां चिन्ता यत्र क ... ग्रन्थस्य नाम वार्त्तिकम् ॥

टीका[१] निरन्तर व्याख्या(१) पञ्जिका[१] पदभञ्जिका(२) ॥१७०॥
निबन्ध[१]-वृत्ती[२] अन्वर्थे(३) संग्रह[१]स्तु समाहृतिः[२] ।
(४)परिशिष्ट[१]-पद्धत्या[२]-दीन् यथा ऽनेन समुन्नयेत् ॥१७१॥
कारिका[१] तु स्वल्पवृत्तौ बहो रर्थस्य सूचनम् ।
कलिन्दिका[१] सर्व्वविद्या(५) निघण्टु[१] र्नामसंग्रहः[२] ॥१७२॥
इतिहासः[१] पुरावृत्तं(६) प्रवह्लिका[१] प्रहेलिका[२] ।
जनश्रुतिः[१] किंवदन्ती[२] वार्त्तै[३]तिह्यं[१] पुरातनी ॥१७३॥
वार्त्ता[१] प्रवृत्ति[२]र्वृत्तान्त[३] उदन्तो[४]ऽथा ह्वयो[१]ऽभिधा[२] ।
गोत्र[३]-संज्ञा[४]-नामधेया[५]-ऽऽख्या[६]-ऽऽह्वा[७]-ऽभिख्या[८]श्च नाम च ॥
सम्बोधन[१] मामन्त्रण[२] माह्वानं[१] त्वभिमन्त्रणम् ।
आकारणं[२] हवो[४] हूतिः[५] संहूति[१] र्बहुभिः कृता ॥१७५॥
उदाहार[१] उपोद्घात[२] उपन्यास[३] श्च वाङ्मुखम्[४] ।
व्यवहारो[१] विवादः[२] स्यात् शपथः[१] शपनं[२] शपः[३] ॥१७६॥

---

(१) सुगमानां विषमाणाञ्चार्थानां निरन्तरम् अन्तराभवेनाविच्छेदेन व्याख्या "पदच्छेदः पदार्थोक्तिर्व्विग्रहो वाक्ययोजना । आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम्" इत्युक्ता पञ्चलक्षणान्विता यस्यां सा निरन्तर व्याख्या, एवम्विधो यो ग्रन्थ स्तस्य नामैकं टीका ॥

(२) विषमाण्येव पदानि अर्थांश्च भनक्ति व्याख्यातीति पदभञ्जिका-तद्विध ग्रन्थस्य नामैकं पञ्जिका ।

(३) अनुगतो मिलितोऽर्थो यत्रासावन्वर्थः ॥

(४) एकैकं ज्ञेयम्, अपि च, अनेन यथा अन्वर्थ मार्गेणैव परिशिष्टञ्च परिशिष्ट पद्धती ते आदौ येषां तथा तान् समुन्नयेत् जानीयात् आदिपदग्रहणात् अध्यायः उच्छ्वासः अङ्कः सर्गः इत्यादयो ग्रन्थावयवविशेषा ज्ञेयाः ।

(५) अकारान्तोऽप्ययम् पुं ॥

(६) पूर्व्वचरितमित्यर्थः ॥

उत्तरं[1] तु प्रतिवचः[2] प्रश्नः[1] पृच्छा[2] ऽनुयोजनम्[3] ।
(१)कथङ्कथिकता[4] चाथ देवप्रश्न[1] उपश्रुतिः[2] ॥१७७॥
(२)चटु[1] चाटु[2] प्रियप्रायं प्रियसत्यं तु सूनृतम् ।
सत्यं[1] सम्यक्[2] समीचीनम्[3] ऋतं[4] तथ्यं[5] यथातथम्[6] ॥१७८॥
यथास्थितं[7] च सद्भूते[8] ऽलीके[1] तु वितथा[2] नृते[3] ।
अथ क्लिष्टं[1] सङ्कुलं[2] च परस्परपराहतम् ॥१७९॥
सान्त्वं[1] सुमधुरं ग्राम्य[1] मश्लीलं[2] म्लिष्ट[1] मस्फुटम् ।
लुप्तवर्णपदं ग्रस्त[1] मवाच्यं[1] स्या दनक्षरम्[2] ॥१८०॥
अम्बूकृतं[1] सथूत्कारं निरस्तं[1] त्वरयोदितम् ।
आम्रेडितं[1] द्विस्त्रिरुक्त मबद्धं[1] तु निरर्थकम्(३) ॥१८१॥
पृष्ठमांसादनं तद्यत् परोक्षे दोषकीर्त्तनम् ।
मिथ्याभियोगो ऽभ्याख्यानं[1] सङ्गतं[1] हृदयङ्गमम् ॥१८२॥
परुषं[1] निष्ठुरं[2] रूक्षं[3] विक्रुष्ट[4] मथ घोषणा[1] ।
उच्चैर्घुष्टं[2] वर्णने डा[2] स्तवः[3] स्तोत्रं[4] स्तुति[5]र्नुतिः[6] ॥१८३॥
श्लाघा[7] प्रशंसा[8] ऽर्थवादः[9] सा तु मिथ्या विकत्थनम्[1] ।
(४)जनप्रवादः[1] कौलीनं[2] विगानं[3] वचनीयता[4] ॥१८४॥
स्या दवर्ण[1] उपक्रोशो[2] वादो[3] नि-अपर्य-आत् परः(५) ।
गर्हणा[4] धिक्क्रिया[7] निन्दा[8] कुत्सा[9] क्षेपो[10] जुगुप्सनम्[11] ॥

---

(१) कथं कथं हे भद्र इति जल्पो यस्याम् ॥
(२) चटुः पुंक्ली, चाटुरपि पुंक्ली, प्रियं इष्टं अनयोऽनुकूलमित्यर्थः ।
(३) अर्थेन असम्बद्धं यथा दशदाडिमादि वाक्यं समुदायार्थशून्यम् ॥
(४) लोकापवादस्य ॥
(५) निरः परेः अपात् चोपसर्गात् परः अपे वादः इति योजनेन निवादः १ परिवादः २ अपवाद इति ॥

आक्रोशा[1]-भीषङ्गा[2]-शपाः[3] शापः[4] स आख्या[1] रते।
विरुद्धशंसनं गालि(१)राशी[1] र्मङ्गलशंसनम् ॥१८६॥
श्लोकः[1] कीर्त्ति[2] र्यशो[3]ऽभिख्या[4] समाज्ञा[5] ख्यती[1] पुनः(२)।
अशुभावाक् शुभा कल्या[1] चर्चरी[1] चर्भटी[2] समे(३) ॥१८७॥
यः सनिन्द उपालम्भ स्तत्र स्यात्परिभाषणम्[1]।
आपृच्छा[1]ऽलापः[2] सम्भाषो[3]ऽनुलापः[1] स्यात् मुहुर्वचः ॥१८८॥
अनर्थकं तु प्रलापो[1] विलापः[1] परिदेवनम्[2]।
उल्लापः(४) काकुवागन्योन्योक्तिः(५) संलाप[1]-सङ्कथे[2] ॥१८९॥
विप्रलापो[1] विरुद्धोक्ति रपलाप[1] स्तु निह्नवः।
सुप्रलापः[1] सुवचनं सन्देशवाक् तु वाचिकम् ॥१९०॥
आज्ञा[1]ऽशिष्टि[2]र्नि-राङ्-नि-भ्यो(६) देशो[5] नियोग[6]-शासने[7]
अववादो[8]ऽथा हूयप्रेषणं(७) प्रतिशासनम् ॥१९१॥
संवि[1]त्सन्धा[2]ऽऽस्था[3]ऽभ्युपायः[4] सं-प्रत्या-ङ्-भ्यः परः श्रवः[5-7](८)
अङ्गीकारो[8]ऽभ्युपगमः[9] प्रतिज्ञा[10]ऽऽगू[11] श्च सङ्गरः[12] ॥१९२

---

(१) गालिः स्त्रीलिङ्गं, तथा आशीरपि, आशीः आशिषौ आशिष इति रूपम्॥

(२) समज्ञा इति वा पाठः, ख्यती त्वप्रत्ययान्तः वाच्यलिङ्गोऽयम्॥

(३) हर्षक्रीडावचसो नामनी द्वे।

(४) काक्वा वचनं काकुवाक्, शोकभयादिभिः शोभितकण्ठे ध्वनिः काकुः, यदमर आह, "काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेरिति" शोकभयादिभिः शोभितकण्ठभाषणं वैकृतालाप इति॥

(५) अन्योन्येन उक्तिर्भाषणम्॥

(६) निराङ्निभ्य उपसर्गेभ्योऽपि देशः, निर्देशः१ आदेशः२ निदेशः॥

(७) आहूय आगतस्य यत्प्रेषणं मोचनम्॥

(८) संप्रत्याङ्भ्य उपसर्गेभ्यः परोऽपि श्रवः, तेन संश्रवः१ प्रतिश्रवः२ आश्रवश्च॥

गीत-नृत्य-वाद्य-त्रयं(१) नाट्यं[१] तौर्यत्रिकं[२] च तत् ।
सङ्गीतं प्रेक्षणार्थेऽस्मिन् शास्त्रोक्ते नाट्यधर्म्मिका[१](२) ॥१८३॥
गीतं[१] गानं[२] गेयं[३] गीति[४]र्गान्धर्वं[५] मथ नर्त्तनम् ।
नटनं[२] नृत्यं[३] नृत्तं[४] च लास्यं[५] नाट्यं[६] च ताण्डवम्[७] ॥१८४॥
मण्डलेन तु यन्नृत्यं स्त्रीणां हल्लीसकं[१] हि तत्(३) ।
पानगोष्ठ्या सुरताख्यं[१] रथो वीरजयन्तिका[१] ॥१८५॥
स्थानं नाट्यस्य रङ्गः[१] स्यात् पूर्वरङ्गः उपक्रमः[१] ।
अङ्गहारो[१]ऽङ्गविक्षेपो व्यञ्जको[१]ऽभिनयः[२] समौ(४) ॥१८६॥
स चतुर्विध आहार्यो[१] रचितो भूषणादिना ।
वचसा वाचिको[१]ऽङ्गेनाङ्गिकः[१] सत्त्वेन सात्त्विकः[१] ॥१८७॥
स्युर्नाटकं[१] प्रकरणं[२] भाणः[३] प्रहसनं[४] डिमः[५] ।
व्यायोग[६]-समवकारौ[७] वीथ्य[८]-ङ्क[९]-ईहामृगा[१०] इति(५) ॥१८८॥
अभिनेयप्रकाराः स्युर्भाषाः षट् संस्कृतादिकाः(६) ।
भारती[१] सात्त्वती[२] कैशिक्या[३]-रभट्यौ[४] च वृत्तयः[१](७) ॥१८९॥

---

(१) भरतादि शास्त्रनिर्दिष्टं गीत-नृत्य-वाद्य-त्रयं तन्नामैकं तौर्यत्रिकमिति ।

(२) अस्मिन्निति भरतादि शास्त्र रचितैः, नाट्यधर्म्मी इति प्राथमिक नाम अत्र सार्थकः नाट्यधर्म्मिणा स्त्रीलिङ्गः, सभ्यानां प्रेक्षणार्थं प्रारब्धस्य तौर्यत्रिकस्यैव नाम ।

(३) स्त्री, वाचस्पतिस्तु हल्लीसकोऽस्त्रियामित्याह ॥

(४) हस्तादिभिः कृताभिनयस्य ।

(५) रूपकप्रबन्धभेदानामेतेषां । आभाणः समवाकारौ इति वा पाठः ॥

(६) संस्कृत१ प्राकृत२ मागधी३ शौरसेनी४ पैशाची५ अपभ्रंश६ नामकाः षड्भाषा उच्यन्ते ॥

(७) भारत्यादीनां चतसृणां ॥

वाद्यं[१] वादित्र[२] मातोद्यं[३] तूर्य्यं[४] (१) तूरं[५] वारध्वनः[१] ।
ततं[१] वीणाप्रभृतिकं तालप्रभृतिकं घनम्[१] ॥२००॥
वंशादिकन्तु सुषिरं[१] मानद्धं[१] मुरजादिकम् ।
वीणा[१] पुनर्घोषवती[२] विपञ्ची[३] कण्ठकूणिका ॥२०१॥
वल्लकी[५] सा ऽथ तन्त्रीभिः सप्तभिः परिवादिनी[१] ।
शिवस्य वीणा ऽनालम्बी[१] सरस्वत्या स्तु कच्छपी[१] ॥२०२॥
नारदस्य तु महती[१] गणानां तु प्रभावती[१] ।
विश्वावसो स्तु बृहती[१] तुम्बुरो स्तु कलावती[१] ॥२०३॥
चण्डालानां तु कटोल (२)वीणा[१] चाण्डालिका[२] च सा ।
कायः कोलम्बक[१] स्तस्या उपनाहो निबन्धनम् ॥२०४॥
दण्डः पुनः प्रवालः[१] स्या त्ककुभ[१] स्तु प्रसेवकः[२] ।
मूले वंशशलाका स्यात् कलिका कूणिका[२] ऽपि च ॥२०५॥
कालस्य क्रिययामानं तालः साम्यं पुन र्लयः (३) ।
द्रुतं विलम्बितं मध्य मोघ स्तत्वं[२] घनं क्रमात् ॥२०६॥
मृदङ्गो[१] मुरजः[२] सोऽङ्क्या[१] (४)ऽलिङ्ग्य[२] ऊर्ध्वक[३] इति त्रिधा ।
स्या द्यशः पटहो[१] ढक्का[२] (५)भेरी[१] दुन्दुभि[२] रानकः[३] ॥२०७॥

---

(१) तूर्य्यमिति पुंस्को ॥ (२) कण्डोल इति वा पाठः ।

(३) द्रुतादि लयानामेकैकम् ॥

(४) अङ्क्यो अङ्क्यौ अङ्क्यः, आलिङ्ग्यो आलिङ्ग्यौ द्वाविमप्रत्ययान्तौ आलिङ्ग्यनस्य ॥

(५) तथा च रत्नोदयः "सार्द्धहस्तमयं मानं भेरीणां समुदाहृतम् । पिण्डे षडङ्गुला प्रोक्ता वादयेन्मुखपार्श्वयोः ॥ करिरे भङ्गिरे भुङ्गरङ्गिरे भ्रंषिरे चङ्गिने भुभुरे । पञ्चतालेषु भेरीबुधैः प्रोच्यते" तार्किकास्तु भेरीदण्डयोः संयोगः यदि भेरी दण्डाभ्यां भिन्न इत्याह

पटहो[४]ऽथ शारिका[१] स्यात्कोणो[१] (१)वीणादिवादनम्।
(२)शृङ्गार[१]-हास्य[२]-करुणा[३] रौद्र[४]-वीर[५]-भयानकाः[६] ॥२०८
बीभत्सा[७]द्भुत[८]-शान्ताश्च रसा[१] भावाः[१] पुनस्त्रिधा।
स्थायि[१]-सात्त्विक[२]-सञ्चारि[३]-प्रभेदैः स्याद्रतिः[१] पुनः ॥२०९
रागो[२]ऽनुरागो[३]ऽनुरति[४]र्हास[१]स्तु हसनं[२] हसः[३]।
घर्घरो[४] हासिका[५] हास्यं[६] तत्रादृष्टरदे स्मितम्[१] ॥२१०॥
वक्रोष्ठिका[२]ऽथ हसितं[१] किञ्चिद्दृष्टरदाङ्कुरे(३)।
किञ्चिच्छ्रुते विहसितं[१] मट्टहासो[१] महीयसि ॥२११॥
अतिहास[१]स्त्वनुस्यूते(४)ऽपहासो[१]ऽकारणात्कृते।
सोत्प्रासे स्यादाच्छुरितकं[१] हसनं[१] स्फुरदोष्ठके(५) ॥२१२॥
शोकः[१] शुक्(६) शोचनं[३] खेदः[४] क्रोधो[१] मन्युः[२] क्रुधा[३] रुषा[४]।
क्रुत्[५] कोपः प्रतिघो[७] रोषो[८] रुट्[९] चोत्साहः[१] प्रगल्भता[२]॥
अभियोगो[३](७)-द्यमो[४] प्रौढि[५]रुद्योगः[६] कियदेतिका[७]।
अध्यवसाय[८] ऊर्जो[९]ऽथ वीर्यं[१] सोऽतिशयान्वितः ॥२१४॥

---

भेरीशब्देन "दमदमा" इति लोकप्रसिद्धस्य नाम इत्याहुः, अपरे तु आद्ये द्वे भेरी नाम्नी इत्याहुः। भेरी स्त्री, दुन्दुभी पुं, आनकोऽपि पुं, भिःपटहः पुंक्ली।

(१) कोणः पुं, द्वयोस्तु कोण इति वाचस्पतिः।

(२) शृङ्गारशब्दस्तु पुंक्लीं। हास्यादयस्तु पुंलिङ्गाः।

(३) किञ्चित् लोकत्वात् दृष्टा विलोकिता रदा दन्ता एव अङ्कुरा यस्मिन् स किञ्चिद्दृष्टरदाङ्कुरः तस्मिन् एवंविधे हासे इत्यर्थः।

(४) निरन्तरे इत्यर्थः।

(५) स्फुरन् चलन् ओष्ठो यस्मिन् स तथा तस्मिन् स्फुरदोष्ठके हासे

(६) शुक् स्त्री, मन्युः पुं, क्रुत् स्त्री, रुट् स्त्री।

(७) पुंक्ली संयौ।

भयं[१] भी[२] र्भीति[३] रातङ्क[४] आशङ्का[५] साध्वसं[६] दरः[७] ।
भिया च[८](१) तत्स्याद्विभयं[१] भूपतीनां स्वपचक्रजम् ॥२१५॥
अदृष्टं[१] वह्नितोयादे र्दृष्टं[१] स्वपरचक्रजम् ।
भयङ्करं[१] प्रतिभयं[२] भीमं[३] भीष्मं[४] भयानकम्[५] ॥२१६॥
भीषणं[६] भैरवं[७] घोरं[८] दारुणं[९] च भयावहम् ।
जुगुप्सा[१] तु घृणा[२]ऽथ स्याद्विस्मय[१]श्चित्र[२] मद्भुतम्[३] ॥२१७॥
चोद्य[४](२)-माश्चर्यं[५] शमः[१] शान्तिः[२] शमथो[३]-पशमा[४] वपि ।
तृष्णाक्षयः[५] स्थायिनोऽमी रसानां कारणं क्रमात् ॥२१८॥
स्तम्भो[१] जाड्यं[२] स्वेदो[१] घर्मो[२] निदाघो[३] पुलकः[१] पुनः(३) ।
रोमाञ्चः[२] कण्टको[३] रोमविकारो[४] रोमहर्षणम् ॥२१९॥
रोमोद्गम[६] उद्धुषण[७](४) मुल्लकसन[८] मित्यपि ।
स्वरभेद[१] स्तु कल्लत्वं स्वरे कम्प[१] स्तु(५) वेपथुः[२] ॥२२०॥
वैवर्ण्यं[१] कालिका[२]ऽथाश्रु[१] बाष्पो[२] नेत्राम्बु[३] रोदनम्[४] ।
अस्र[५] मस्रु[६](६) प्रलय[१] स्त्वचेष्टते त्यष्टसात्त्विकाः ॥२२१॥
धृतिः[१] सन्तोषः[२] स्वास्थ्यं[३] स्यादाध्यानं[१] स्मरणं[२] स्मृतिः[३] ।
मति[१] र्मनीषा[२] बुद्धि[३] र्धी[४] र्धिषणा[५]-ज्ञप्ति[६]-चेतनाः[७] ॥२२२॥
प्रतिभा[८]-प्रतिप[९]त्प्रज्ञा[१०]-प्रेक्षा[११]-चिदु[१२]-पलब्धयः[१३] ।
संवित्तिः[१४] शेमुषी[१५] दृष्टिः[१६](७) सा मेधा[१] धारणक्षमा ॥२२२

---

(१) भीतिः स्त्री, दरः पुंक्ली, भिया इत्येव मङ्प्रत्ययान्तत्वादावन्तः ।

(२) चोद्यं इति वा पाठः ।

(३) पुलकः पुंक्ली, कण्टकोऽपि पुंक्ली ।

(४) उद्धर्षणं इति वा उल्लसनक इति वा पाठः ।

(५) स्वरकम्प इत्येकं वा नाम, वेपथुः पुं ।

(६) अस्रं क्ली, अस्र इति वा पाठः । बाष्पः पुंक्ली, ।

(७) चित् स्त्री, या मति धारणक्षमा धारणसमर्था मेधा इत्युच्यते ।

प्रज्ञा[1] तत्रागुगा मोक्षे ज्ञानं[1] विज्ञान[1] मन्यतः[1)] ।
शुश्रूषा[1] श्रवणं[2] चैव ग्रहणं[3] धारणं[4] तथा ॥२२४॥
ऊहो[5]ऽपोहो[6]ऽर्थविज्ञानं[7] तत्त्वज्ञानं[8] च धीगुणाः ॥
[(2)]व्रीडा[1]लज्जा[2]मन्दाक्षं[3]ह्री[4]स्त्रपा[5]सा ऽपत्रपा[1]ऽन्यतः॥२२५॥
जाड्यं[1] मौर्ख्यं[2] विषादो[1]ऽवसादः[2] सादो[3] विषण्णता[4] ।
मदो[1] मुन्मोहसम्भेदो[(3)] व्याधि स्त्वा धी रुजाकरः ॥२२६॥
निद्रा[1] प्रमीला[2] शयनं[3] संवेश[4]-स्वाप[5]-संलयाः[6] ।
[(4)]नन्दीमुखी[7] श्वासहेति[8]स्तन्द्रा[9]सुप्तं[1]तु साऽधिका॥२२७
औत्सुक्य[1] रणरणको[2]-त्कण्ठे[3] आयल्लका[4]-ऽरती[(5)] ।
उल्लेखा[6]-त्कलिके[7] वा थावहित्था[1] [(6)]ऽकारगोपनम्[2(7)] ॥
शङ्का[1] ऽनिष्टोत्प्रेक्षणं[(8)] स्या ज्ञापक त्व नवस्थितिः[2] ।
आलस्यं[1] तन्द्रा[2] कौसीद्यं[3] हर्षं[1] चित्तप्रसन्नता[2] ॥२२८॥
ह्लादः[3] प्रमोदः[4] प्रमदो[5]-मु[6]-त्प्रीत्या[7]-मोद[8]-सम्मदाः[9]।

---

[1]मतिरागामिका ज्ञेया बुद्धिस्तत्कालदर्शिनी । प्रज्ञा चातीतकालस्य मेधा कालत्रयात्मिका" इत्यन्ये भिदन्ति ।

(1) अन्यत इति मोक्षशास्त्रादन्यत्र शिल्पे चित्रादौ च या मति निपुणायते तदेकं नाम विज्ञानम् ।

(2) चत्वारि क्रदन्येत्यन्ये, स्त्रीत्यन्ये, स्त्रीति स्त्रीलिङ्गौ ।

(3) तन्मते सम्भेदौ इति पाठः । आधिर्मनः पीडा व्याधिरुच्यते त्यन्वयः ।

(4) "अविकारोऽद्रुतं मत्तं मान्दियस्यं स्वाङ्गमुच्यते" इति शाकलक्षणात् दीवदयम्, नन्दीमुखापि आवन्ता गङ्गावद् ।

(5) अरती स्त्री ।

(6) क्लीवेऽवहित्थं कुलवत्, वस्तुतस्तु स्त्रीक्ली ।

(7) आकारस्य मुखविकार मुखरागादे गोपनम् आच्छादनम् ।

(8) अनिष्टस्योत्प्रेक्षणं सम्भावनमित्यर्थः ।

आनन्दा[1]-नन्दथू[2](1) गर्वस्त्व[1]हङ्कारो[2]ऽवलिप्तता[3] ॥२२०॥
दर्पो[4]ऽभिमानो[5](2) ममता[6] मान[7]श्चित्तोन्नतिः[8] स्मयः[9] ।
स मिथोऽहमहमिका[1] या तु सम्भावनात्मनि(3) ॥२२१॥
दर्पात् साऽऽहोपुरुषिका[1] स्यादहम्पूर्विका[1] पुनः(4) ।
अहं पूर्वमहं पूर्वमित्युग्रत्वं[1] तु चण्डता[2] ॥२२२॥
प्रबोध[1]स्तु विनिद्रत्वं[2] ग्लानि(5)स्तु बलहीनता ।
दैन्यं[1] कार्पण्य[2]श्रम[1]स्तु क्लमः[2] खेदः[3] परिश्रमः[4] ॥२२३॥
प्रयासा[5]-यास[6]व्यायामा[7] उन्माद[1]श्चित्तविभ्रमः[2] ।
(6)मोहो[1] मौढ्यं[2] चिन्ता[1] ध्यान[2]ममर्षः[1] क्रोधसम्भवः ॥२२४॥
गुणो जिगीषो[1]स्त्वाहवं त्रासस्त्वाकस्मिकं भयम् ।
अपस्मारः[1] स्यादावेशो निर्वेदः[1] स्वावमाननम् ॥२२५॥
आवेग[1]स्तु त्वरि[2]स्तूर्णिः[3] संवेगः[4] सम्भ्रम[5]स्त्वरा[6] ।

---

(1) मुत्प्रकर्षः स्त्री, आनन्दथुः पुं ।

(2) अभिमानः पुंक्ली, वैजयन्तीकारस्तु "अभिमानस्त्वहङ्कारो गर्वोऽस्त्री" त्याह ।

(3) अहो अहं पुरुषः इति दर्पात् अहङ्कारात् या आत्मनिस्वविषये सम्भावना सा आहोपुरुषिका, "यत्र ह्यथाभिनिवेशः स्यात् साऽऽहोपुरुषिकां विदुः" यत्सौन्दर्यलहरी आह "पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका"।

(4) अहं पूर्वं इति यस्यां क्रियायां सर्वे ब्रुवते साऽहंपूर्विका ।

(5) ग्लानिः स्त्री ।

(6) मोहो मूर्छा अविद्या च यन्महेश्वरः "मोहमिच्छन्ति मूर्छायामविद्यायां च सूरय" इति । मूर्छायां यथा "अथ मोहपरायणा सती विवशा कामवधूर्विबोधिता" अविद्या विपर्ययस्तत्र यथा "न मुषामः कामानहह गहनो मोहमहिमा"।

वितर्कः[1](१) स्यादुन्नयनं[2] परामर्शो[3] विमर्शनम् ॥२२६॥
अध्याहार[5]स्तर्क[6] ऊहो[7] ऽसूया[1] त्वन्यगुणदूषणम् ।
मृतिः[1] संस्था[2](२) मृत्यु[3]-कालौ[4] परलोकगमो[5] ऽत्ययः[6] ॥२२७॥
पञ्चत्वं[7] निधनं[8] नाशो[9] दीर्घनिद्रा[10] निमीलनम् ।
दिष्टान्तो[12]ऽस्तं[13] कालधर्मो[14]ऽवसानं सा तु सर्वगा ॥२२८॥
(३)मरको[1] मारि[2]स्त्रयस्त्रिंशदमी व्यभिचारिणः ।
स्युः कारणानि कार्याणि सहचारीणि यानि च ॥२२९॥
रत्यादेः स्थायिनो लोके तानि चेत्काव्यनाट्ययोः ।
विभावा[1] अनुभावा[2]श्च व्यभिचारिण[3](४) एव च ॥२३०॥

---

(१) त्वरिः स्त्री, तूर्णिरपि स्त्री, वितर्कः पुं, वैजयन्ती कारस्तु "वितर्कस्तर्कमस्त्रिया"मित्याह ।

(२) संस्थः संस्था इत्येवं स्त्रीपुं । सं पूर्व स्थाधातो मरणार्थकत्वात् प्रमादाय प्रवृत्ति निमित्तता बोध्या । निधनं पुंक्ली ।

(३) मरकः पुंक्ली, मारिः स्त्री ।

(४) विविध माभिमुख्येन चरन्तीति व्यभिचारिणो भावा उच्यन्ते, स्यात् रतिः रागोऽनुरागोऽनुरतिरित्यादिनवविधस्य स्थायीभावस्य लोके यानि कारणानि कारणभूतानि आलम्बनोद्दीपनस्वभावानि ललनोद्यानादीनि स्युः तानि काव्यनाट्ययोः काव्ये नाट्ये च विभावा उच्यन्ते, रागादि नवविधस्थायिभावस्य कारणानाम् आलम्बनोद्दीपनस्वभावानां ललनोद्यानादीनां नाम काव्यशास्त्रे नाट्यशास्त्रे च विभाव इत्यर्थः । च पुनः एवं कार्याणि कार्यभूतानि कटाक्षभुजाक्षेपादीनि अनुभावा उच्यन्ते. रागादि नवविधस्थायिभावस्य कारणभूतानामालम्बनोद्दीपनस्वभावानां ललनादीनां कार्यभूतकटाक्षभुजाक्षेपादीनां नाम अनुभाव इत्यर्थः । व्यक्तः प्रकटः सभास्थितानां लोकानां वासनारूपेण स्थितः स स्थायी रसः शृङ्गारादि भवेत् विभावैः१ अनुभावैः२ सात्त्विकैः३ व्यभिचारिभिः४ चतुर्भिः स्थायी भावो रसः कथ्यत इत्यर्थः ।

व्यक्तः स तैर्विभावाद्यैः स्थायीभावो भवेद्रसः[1] ।
पात्रमाविर्[1] नाट्येऽधिकृता तत्तद्वेषस्तु भूमिका[1] ॥२४१॥
शैलूषो[1] भरतः[2] सर्वकेशी[3(1)] भरतपुत्रकः[4] ।
धर्मीपुत्रो[5(2)] रङ्ग-जाया-जीवौ[7] रङ्गावतारकः[8] ॥२४२॥
(3)नटः[9] कृशाश्वी[10] शैलाली[11] चारणस्तु[1] कुशीलवः[2] ।
भ्र-भ्रु-भ्रू-भ-परः कुंसो[4(4)] नटः स्त्रीवेषधारकः ॥२४३॥
वेषाचार्यः[1] पीठमर्दः[2] सूत्रधारस्तु[1] सूचकः ।
नन्दी[1] तु पाठको नान्द्याः(5) पार्श्वस्थः[1] पारिपार्श्विकः[2] ॥
(6)वासन्तिकः[1] केलिकिलो[2] वैहासिको[3] विदूषकः[4] ।
प्रहासी[5] प्रीतिद[6]श्चाथ पिङ्गः[1] पल्लविको[2] विटः[3(7)] ॥२४५॥
पिता त्वावुक[1] आवुत्त-भावुकौ[2] भगिनीपतौ ।

(१) सर्ववेशी इति पाठः ।

(२) धात्रीपुत्रः इति वा, रङ्गजायाभ्यामाजीवः, रङ्गाजीवः १ जायाजीवः २ ।

(३) नटः पुंस्त्री, कृशाश्वीति दन्त्यः शैलाली णिन्नन्तः ।

(४) भ्रकुंसः १ भ्रुकुंसः २ भ्रूकुंसः ३ भकुंसः ४ इति ।

(५) नान्द्याः पूर्वरङ्गाङ्गस्य द्वादशतूर्यघोषनाम्नः पाठकोऽध्यापको नन्दीत्युच्यते, नन्दिनौ नन्दिन इत्यादि रूपाणि । नन्दशब्दात् प्रज्ञाद्यणि नान्दी स्त्रीलिङ्गः, नान्द्यौ नान्द्य इति । भम्भा१ मउद२ मद्दल३ कडम्ब४ झल्लरि५ हुडुक्क६ कंसाला७ काहल८ तिलिमा९ वंसो१० सङ्खो११ पणवो१२ य नाडए१२ नन्दी१ इति नाटकनान्दीयम् । ढक्का१ ढक्का२ डमरुय३ काहल४ बुक्क५ भेरी६ भाणगं७ पडहो८ जगमक्क९ करडि१० पुणगसमद्दल११ कंसाल१२ रणनन्दी२ इति रणनान्दीयम् ॥

(६) क्रीडनीयकपात्रस्य ।

(७) विटः पुंस्त्री, अतःपरं यावत्काण्डसमाप्तिर्नाट्योक्ताधिकारः ।

भावो[१] विद्वान् युवराजः कुमारो[१] भर्तृदारकः[२] ॥२४६॥
बाला वासू[१] मार्ष[१] आर्यो[२] देवो[१] भट्टारको[२] नृपः ।
राष्ट्रियो[१] नृपतेः स्यालो दुहिता भर्तृदारिका[१] ॥२४७॥
देवी[१] कृताभिषेका न्या भट्टिनी[१][(१)] गणिका ऽज्जुका[२] ।
नीचा-चेटी-सखी-हूतौ हण्डे[१] हञ्जे[१] हला:[१] क्रमात्[(२)] ॥
अब्रह्मण्य[१] मवध्योक्तौ ज्यायसी तु स्वसा ऽत्तिका[१][(३)] ।
भर्त्ता र्यपुत्रो[१] माता ऽम्बा[१] भदन्ताः[१] सौगतादयः ॥२३८॥
पूज्ये[१] तत्रभवा[२] नत्रभवां[२] श्च भगवा[४]नपि ।
पादा[१] भट्टारको[२] देवः[२] प्रयोज्यः पूज्यनामतः[(४)] ॥२५०॥

इत्याचार्य्य श्रीहेमचन्द्रविरचितायामभिधानचिन्ता-
मणौ नाममालायां देवकाण्डो द्वितीयः ॥

---

(१) यन्महेश्वरः "भट्टिनी द्विजभार्य्यायां नाट्योक्तौ राजयोषिति" ।

(२) एषां त्रयाणां सम्बोधनत्वादन्येऽन्यानि रूपाणि नस्युः "अयोत्याय सखीनां सा प्रेष्या लज्जादिणोऽखिलाः । अदर्शयत् कराग्रेण हलाः पश्यत पश्यत इति" तिलकाचार्य्यः । एवं हला इत्यस्य एकवचनबहुवचनोदाहरणम् ॥

(३) अत्तेव मातेव इत्यर्थक ।

(४) पूज्यनामतः अर्थे प्रयोक्तव्याः, भट्टारकस्य ।

## मर्त्यकाण्डः ।

—•◎•—

तृतीयः ।

मर्त्यः[१] पञ्चजनो[२] भूस्पृक्[३] पुरुषः[४] पूरुषो[५] नरः[६] ।
मनुष्यो[७] मानुषो[८] ना[९] विट्[१०] मनुजो[११] मानवः[१२] पुमान्[१३] ॥१॥
बालः[१] पाकः[२] शिशु[३] र्डिम्भः[४] पोतः[५] शावः[६] स्तनन्धयः[७] ।
पृथुका[८]-र्भौ[९]-स्तनपायाः[१०] क्षीरकण्ठः[११] कुमारकः[१२] ॥२॥
शिशुत्वं[१] शैशवं[२] बाल्यं[३] वयस्थस्त रुणो[१] युवा[२] ।
तारुण्यं[१] यौवनं[२](१) वृद्धः[१] प्रवयाः[२] स्थविरो[३] जरन्[४] ॥३॥
(२)जरी[५] जीर्णो[६] यातयामो[७] जीनो[८] ऽथ विस्रसा[१] जरा[२] ।
वार्द्धकं[१] स्थाविरं[२] ज्यायान्[१] वर्षीयान्[२] दशमी[३] त्वपि(३) ॥४॥
विद्वान्[१] सुधीः[२] कवि[३]-विचक्षण[४]-लब्धवर्णा[५] ज्ञः[६]
प्राप्तरूप[७]-कृति[८]-कृष्टि[९]-अभिरूप[१०]-धीराः[११] ।
मेधावि[१२]-कोविद[१३]-विशारद[१४]-सूरि[१५]-दोषज्ञाः[१६]
प्राज्ञ[१७]-पण्डित[१८]-मनीषि[१९]-बुध[२०]-प्रबुद्धाः[२१] ॥४॥
व्यक्तो[२२] विपश्चित्[२३] संख्यावान्[२४] सन्[२५] प्रवीणस्तु शिक्षितः[२] ।
निष्णातो[३] निपुणो[४] दक्षः[५] कर्म्म[६]-हस्त[७]-मुखाः[८] कृतात्[९](४) ॥६॥

---

(१) यौवनशब्दः पुंक्लीः ।

(२) जरी जरिणौ जरिणः इति रूपाणि ।

(३) अतिवृद्धस्य, दशमिनौ दशमिनः ॥

(४) कृतकर्म्मा कृतकर्म्माणौ कृतकर्म्माणः कृतहस्तः, कृतमुखः, इत्यादि ॥

कुशलः[६] चतुरो[१०]ऽभिज्ञ[११]-विज्ञ[१२] वैज्ञानिकाः[१३] पटुः[१४] ।
छेको[१] विदग्धे[१] प्रौढ[१]स्तु प्रगल्भः[२] प्रतिभान्वितः[२] [(१)] ॥७॥
कुशाग्रीयमतिः[१] सूक्ष्मदर्शी[२] तत्कालधीः[१] पुनः ।
प्रत्युत्पन्नमति[२]र्दूरं यः पश्येद्दीर्घदर्श्यसौ ॥८॥
हृदयालुः[१] सहृदय[२]श्चिद्रूपो[(२)]ऽथ संस्कृते[१] ।
व्युत्पन्न[२]-प्रहत[३]-क्षुण्णा[४(३)] अन्तर्वाणि[(४)]स्तु शास्त्रवित् ॥९॥
[(५)]वागीशो[१] वाक्पति[२]र्वाग्मी[(६)] वाग्योयुक्तिपटुः[२] प्रवाक्[३] ।
समुखो[४] वावदूको[५]ऽथ वदो[१] वक्ता[२] वदावदः[३] ॥१०॥
स्याज्जल्पाक[१]स्तु वाचालो[२] वाचाटो[३] बहुगर्ह्यवाक्[४] ।
[(७)]अवद्दो[१]ऽनुत्तरा[२]-दुर्वाक्[१] कद्वदे[२] स्यादथाधरः[१] ॥११॥
[(८)]हीनवादि[२]न्येडमूका[१]-नेडमूकौ[२] त्ववाक्श्रुतौ ।
रवणः[१] शब्दनः[२] तुल्यौ कुवाद[१]-कुचरौ[२] समौ ॥१२॥

---

(१) प्रतिभामुखः इति वा पाठः ॥

(२) लोकेषु वस्तुतत्त्वज्ञानवतः ।

(३) चत्वारिः शास्त्रादिलब्ध चतुरस्य ।

(४) शास्त्रं वेत्ति न च तथा वक्तुं शक्नोति यः सोऽन्तर्वाणिः ॥

(५) इयं प्रधानवक्तुः वागीशः वाक्पतिः वाग्मी इति लोके, प्रशागित्येकं, सुमुखः वावदूक इति द्वे इति मतान्तरम् ।

(६) पञ्च प्रतिभायुक्तवक्तृकस्य, वाग्मीत्यत्र गकारद्वयं पठनीयम् प्रशस्ता वाग्विद्यतेऽस्येति ग्मिन् प्रत्ययः, तेन गकारद्वय श्रवणम् । यदि तु मिनिरित्येवं च्यते तर्हि यरोऽनुनासिके ऽनुनासिको वा स्यात् प्रत्यये नित्यमिष्यत इति, यो हि संग्म्भाषते स वाग्मीत्येव भवतीति क्षीरस्वामी, वाग्ग्मीति वाग्मी वाग्ग्मिनो चास्य कुल्यकास्य च पाठ इति गः, गस्मिन्ना चोच्चारणे गकार द्वय श्रवणं भवतीति च माधवभट्टः ।

(७) अनूत्तरे इति वा, तन्मते पश्चादुत्तरदातुर्नाम ।

(८) हीनं स्वपराजयं वक्तीति विग्रहः ।

लोहलो[1]ऽस्फुटवाग्[2] मूको[1]ऽवाग्[2] सौम्यस्वरो[1]ऽस्वरः[2] ।
वेदिता[1] विदुरो[2] विन्दु[3] र्वन्दारु[1] स्त्वभिवादकः[2] ॥१३॥
आशंसु[1] राशंसितरि[2] कद्वर[1](1) स्त्वतिकुत्सितः ।
निराकरिष्णुः[1] क्षिप्नुः[2](2) स्याद्विकासी[1] तु विकस्वरः[2] ॥१४॥
दुर्मुखे[1] मुखरा[2]-बद्धमुखौ[3] शक्लः[1] प्रियंवदः[2] ।
दानशीलः स वदान्यो[1] वदन्यो ऽप्यथ बालिशः[1] ॥१५॥
मूढो[2] मन्दो[3] यथाजातो[4] बालो[5] मातृमुखो[6] जडः[7] ।
मूर्खो[8]ऽमेधा[9]-विवर्णा[10]-ज्ञा[11] वैधेयो[12] मातृशासितः[13] ॥१६॥
देवानांप्रिय[14]-जाल्मौ[15] च (3)दीर्घसूत्र[1] श्चिरक्रियः[2] ।
मन्दः क्रियासु कुण्ठः स्यात् क्रियावान्[1] कर्म्मसूद्यतः ॥१७॥
कर्म्मक्षमो[1] ऽलङ्कर्म्मीणः[2] कर्म्मशूर स्तु कर्म्मठः[2] ।
कर्म्मशीलः[1] कार्म्मि[2] आयःशूलिक[1] स्तीक्ष्णकर्म्मकृत् ॥१८॥
सिंहसंहननः[1] स्वङ्गः[2] स्वतन्त्रो[1] निरवग्रहः[2] ।
यथाकामी[3] स्वरुचि[4] श्च स्वच्छन्दः[5] स्वैरी[6] व्यपावृतः[7] ॥१९॥
यदृच्छा[1] स्वैरिता[2] स्वेच्छा[3] नाथवान्[1] निघ्न[2]-गृह्यकौ[3] ।
तन्त्रा[4]-यत्त[5]-वशा[6]-धीन[7]-च्छन्द[8]-वन्तः[9] परात्मरे(4) ॥२ ॥

---

(1) कद्वरः कद्वद इति वा पाठः ।

(2) क्षिप्रः इति वा पाठः ।

(3) दीर्घसूत्र अकारान्तो, दैववत् दीर्घसूत्री इत्यपि व्यञ्जनान्तो णिन्प्रत्ययान्तत्वात् यदाह हलायुधः "दीर्घसूत्री जड़क्रियः" इति दीर्घं सूत्रयतीत्येवं शीलो दीर्घसूत्री इति तट्टीका, "सूत्रण् विमोचने" विमोचनं मोचनाभावो यस्यन्निति यावत् इति धातुपारायणम् ॥

(4) परतन्त्र १ परायत्तः २ परवशः ३ पराधीन ४ परच्छन्दः ५ परवान् ६ ।

लक्ष्मीवान्[१] लक्ष्मणः[२] श्रील[३] इभ्य[१] आढ्यो[२] धनी[३] श्वरः[४] ।
ऋद्धे[५] विभूतिः[१] सम्पत्ति[२] र्लक्ष्मीः[३] श्री[४]-ऋद्धि[५]-सम्पदः ॥२१॥
दरिद्रो[१] दुर्विधो[२] दुःस्थो[३] दुर्गतो[४] निःस्व[५]-कीकटौ[६] ।
अकिञ्चनो[७] ऽधिप[१] ईशो[२] नेता[३] परिवृढो[४] ऽधिभूः[५](१) ॥२२॥
पती[६]-न्द्र[७]-स्वामि[८]-नाथा[९]-र्याः[१०] प्रभु[११]र्भर्त्ते[१२]श्वरो[१३]विभुः[१४]
ईशिते[१५] नो[१६] नायकश्च[१७] नियोज्यः[१] परिचारकः[२] ।२३॥
डिङ्गरः[३] किङ्करो[४] भृत्य[५] श्चेटो[६] गोप्यः[७] पराचितः[८] ।
दासः[९] प्रेष्यः[१०](२) परिस्कन्दो[११] भुजिष्य[१२]-परिकर्म्मिणौ[१३] ॥२४
पराचः[१४] परपिण्डादः[१५] परजातः[१६] परैधितः[१७] ।
भृतको[१] भृतिभुग्[२] वैतनिकः[३] कर्म्मकरो[४] ऽपि च ॥२५॥
स निर्भृतिः(३) कर्म्मकारो[१] भृतिः[१] स्या न्निष्क्रयः[२] पणः[३] ।
कर्म्मण्या[४] वेतनं[५] मूल्यं[६] निर्वेशो[७] भरणं[८] विधा[९] ॥२६॥
भर्म्मण्या[१०] ऽर्म्म[११] भृत्या[१२] च भोग[१] स्तु गणिकाभृतिः ।
खवपुः[१] स्याद् वङ्ककरो[२] भारवाह[१] स्तु भारिकः[२] ॥२७॥
वार्त्तावहो[१] वैवधिको[२] भारो[१] विवध[२]-वीवधौ[३] ।
काचः[१] शिक्यं[२] तदालम्बो भारयष्टि र्विहङ्गिका ॥२८॥
शूर[१] आरभटो[२] वीरो[३] विक्रान्त[४] श्चाथ कातरः[१] ।
दरिद्र[२] श्चकितो[३] भीतो[४] भीरु[५]-भीरुका[६]-भीलुकाः[७] ॥२९॥
विह्वल[१]-व्याकुलौ[२] व्यग्रः[३] कान्दिशीको[१] भयद्रुते ।
उत्पिञ्जल[१]-समुत्पिञ्ज[२]-पिञ्जला-भृशमाकुले ॥३०॥

(१) अधिप इति वा पाठः ।

(२) इषि गति हिंसा दर्शनेषु आत्मनेपदिः श्यादिश्च, अस्मात् ण्यति गुणरूपत्वात् गुणाभावे इष्य इति रूपम्, तस्मिन् परे सति गुण एव भवति पररूपानुपातित्वाद्वृद्धेरप्रसङ्गात् प्रेष्यः इति ॥

(३) निर्भृत्यामूल्येन रहितः स निर्भृतिः ।

महेच्छो[1] त्तूत्कटो[2]-दारो[3]-दान्तो[4]-दीर्घ[5]-महाशयाः[6] ।
महामना[7] महात्मा[8] च कृपणस्तु[1] मितम्पचः[2] ॥२१॥
कीनाश[3] (१) स्तहनः[4] क्षुद्र[5]-कदर्य[6]-दृढमुष्टयः[7] ।
किम्पचानो[8] दयालुस्तु[1] कृपालुः[2] करुणापरः[3] ॥२२॥
सूरतो[4] ऽथ दया[1] शूकः[2] कारुण्यं[3] करुणा[4] घृणा[5] ।
कृपा[6] ऽनुकम्पा[7] ऽनुक्रोशो[8] हिंस्रो[1] शरारु[2]-घातुकौ ॥२३॥

व्यापादनं[1] विशरणं[2] प्रमयः[3] प्रमापणं[4]
निर्ग्रन्थनं[5] प्रमथनं[6] कदनं[7] निवर्हणम्[8] ।
निस्तर्हणं[9] विशसनं[10] क्षणनं[11] परासनं[12]
प्रोज्जासनं[13] प्रशमनं[14] प्रतिघातनं[15] वधः[16] ॥२४॥
प्रवासनो[17]-द्वासन[18]-घात[19]-निर्वा-
सनानि[20] संज्ञप्ति[21]-निशुम्भ[22]-हिंसाः[23] ।
निर्वापणा[24]-लम्भ[25]-निसूदनानि[26]
निर्यातनो[27]-न्माथ[28]-समापनानि[29] ॥२५॥
अपासनं[30] वर्जन[31]-मार[32]-पिञ्जा[33]
निष्कारण[34] (२)-क्राथ[35]-विशारणानि[36] ।
स्युः कर्तने[1] कल्पन[2]-वर्धने च
छेद[4] श्च घातोद्यत आततायी[1] ॥२६॥

[illegible] शीर्षच्छेदिकः[1] शीर्षच्छेद्यो[2] (३) यो वधमर्हति ।
प्रमीतो[1]-पसम्पन्नः[2] परेत[3]-प्रेत[4]-संस्थिताः[5] (४) ॥२

---

(१) तहन इति वा पाठः ।

(२) विकारण इति वा पाठः ।

(३) शीर्षच्छेदकः इति वा पाठः ।

(४) संपूर्वस्थाधातोर्मरणार्थता मादायैतन्निष्पन्नम्।

(१)नामालेख्य-यशः-शेषो[८] व्यापन्नो[९]-पगतो[१०](२) मृतः[११] ।
परासु[१२] स्यादूर्ध्वदानं(३) तदर्थमौर्ध्वदेहिकम्[१] ॥३८॥
मृतस्नानमपस्नानं[१] निवापः[१] पितृतर्पणम् ।
चिति[१]-चित्या[२]-चिता[३] श्चैत्या ऋजु[१] स्तु प्राञ्जलो[२]ऽञ्जसः[३] ॥
दक्षिणो[१] सरलो[२]-दारौ[३] शठ[१] स्तु निकृतो[२]ऽनृजुः[३] ।
क्रूरे[१] नृशंस[२]-निस्त्रिंश[३]-पापा[४] धूर्त्त[१] स्तु वञ्चकः[२] ॥४०॥
व्यंसकः[३] कुहको[४] दाण्डाजिनिको[५] मायि[६]-जालिकौ[७] ।
(४)माया[१] तु शठता[२] शाठ्यं[३] कुसृति[४] र्निकृति[५]श्च सा(५) ॥४१॥
कपटं[१] (६)कैतवं दम्भः[३](७) कूटं[४] छद्मो[५] पधि[६] श्छलम्[७] ।
व्यपदेशो[८] मिषं[९] लक्ष्यं[१०] निभं[११] व्याजो[१२]ऽथ कुक्कुटिः[१] ॥४२॥
कुहना[२] दम्भचर्य्या[३] च वञ्चनं[१] तु प्रतारणम् ।
व्यलीक[३]मतिसन्धानं[४](८)साधौ[१] सभ्या[२]-र्य्य[३]-सज्जनाः[४] ॥४३॥
(९)दोषैकदृक्[१] पुरोभागी[२] कर्णेजप[१] स्तु दुर्जनः[२] ।
पिशुनः[३] सूचको[४] नीचो[५] द्विजिह्वो[६] मत्सरी[७] खलः[८] ॥४४॥

---

(१) नामशेषः आलेख्यशेषः२ यशःशेषः३।

(२) उपगतो इति वा पाठः ।

(३) तस्य मृतस्य ऊर्ध्वदेहमस्मिन् तदूर्ध्वे ।

(४) मायादयः कपटादयश्च एकार्था इत्येके, "कपटादयः सप्त व्यपदेशादयश्च पञ्च भिन्नार्था" इत्यमरः तदा कपटादयः सप्त कपट वाचकाः त आपि च वेष-भाषा विपर्य्ययकरणं कपटं, कार्षापण तुलादेः परवञ्चनार्थं न्यूनाधिककरणं कूटमिति विशेषोनाश्रितः ।

(५) निष्कृतिरिति केचित् ।

(६) कपटं पुंक्लीं, कूटं पुंक्लीं, छद्मन् पुंक्लीं, छद्म, छद्मनी, छद्मानि ।

(७) ऽभिसन्धानम् इति वा ।

(८) दोषैकदृशः, पुरोभागिणौ पुरोभागिणः । इत्यन्तो बोद्धव्याः।

व्यसनार्त्तो[1] ऽप्युपरक्तः[2] चौरे[1] तु प्रतिरोधकः[2] ।
दस्युः[3] (१)पाटच्चरः[4] स्तेनः[5] तस्करः[6] पारिपन्थिकः[7] ॥४५॥
परिमोषि[8]-परास्कन्दी[9](२) ऐकागारिक[10] मलिम्लुचाः[11] ।
यः पश्यतो हरेद् द्रव्यं स चोरः पश्यतोहरः[1] ॥४६॥
चौर्य्यं[1] तु चौरिका[2] स्तेयं[3] (३)लोप्त्रं[4] (४)त्वपहृतं धनम् ।
यद्भविष्यो[1] दैवपरो[2] ऽथालस्यः[1] शीतको[2] ऽलसः[3] ॥४७॥
मन्द[4] स्तुन्दपरिमृजो[5] ऽनुष्णो[6] दक्ष[1] स्तु पेशलः[2] ।
पटू[3]-ष्णो[4]-ष्णक[5]-सूत्थान[6]-चतुरा[7] स्त्वाथ तत्परः[1] ॥४८॥
आसक्तः[2] प्रवणः[3] प्रह्वः[4] प्रसित[5] श्च परायणः[6] ।
दातो[1] दारः[2] स्थूललक्ष्य[1]-दानशौण्डौ[2] बहुप्रदे[3] ॥४९॥
दान[1] मुत्सर्जनं[2] त्यागः[3] प्रदेशन[4]-विसर्ज्जने[5] ।
विहायितं[6](५) वितरणं[7] स्पर्शनं[8] प्रतिपादनम्[9] ॥५०॥
विश्राणनं[10] निर्वपण[11] मपवर्ज्जनं[12] मंहतिः[13] ।
अर्थव्ययज्ञः सुकलो[1] याचक[1] स्तु वनीपकः[2](६) ॥५१॥
मार्गणो[3] ऽर्थी[4] याचनक[5] स्तर्कुको[6] ऽथार्थना[1] प्रणा[2](७)
अर्द्दना[3] प्रणयो[4] याञ्चा[5] याचना[6] ऽध्येषणा[7] सनिः[8] ॥५२॥

---

(१) पटच्चर इत्यपि ।

(२) परास्कन्दी परास्कन्दिनौ परास्कन्दिनः ।

(३) स्तेनस्य भावस्तेयं, स्तेनाद्य लुक् चेति यः, राजादित्वाद्ष्यञि चौर्य्यमपि ।

(४) लोप्त्रमित्यपि हलायुध टीका ।

(५) विहापितम् इति वा पाठः ।

(६) वनीयक इति क्वचित् ।

(७) तर्कुकः इति वा पाठः ॥

(८) अर्द्दनेत्याद्यष्टक प्रणयः पुंसि, अन्ये स्त्रियां। सनिशब्दः पुंस्यपि ।

उत्पतिष्णु[१] रुत्पतिता[२] ऽलङ्करिष्णु[१]स्तु मण्डनः[२] ।
भविष्णु[१]र्भविता[२] भूष्णुः समौ वर्त्तिष्णु[१] वर्त्तनौ[२] ॥५२॥
(१)विसृत्वरो[१] विसृमरः[२] प्रसारी[३] च विसारिणि[४] ।
लज्जाशीलो[१]ऽपत्रपिष्णुः[२] सहिष्णुः[१] क्षमिता[२] क्षमी[३] ॥५३॥
तितिक्षुः[४] सहनः[५] क्षन्ता[६] तितिक्षा[१] सहनं[२] क्षमा[३] ।
ईर्ष्यालुः[१] कुहनो[२]ऽक्षान्ति[१]रीर्ष्या[२] क्रोधी[१] तु रोषणः[२] ॥५५॥
अमर्षणः[३] क्रोधन[४]श्च चण्ड[१]स्त्वत्यन्तकोपनः ।
बुभुक्षितः[१] स्यात् क्षुधितो[२] जिघत्सु[३]रशनायितः[४] ॥५६४॥
बुभुक्षाया। अशनाया[१] जिघत्सा[२] रोचको[४] (२)रुचिः[५] ।
पिपासु[१] स्तृषित[२] स्तृष्णक्[३](३) तृष्णा तर्षो[२]ऽपलाषिका[२] ॥७
पिपासा[४] तृट्[५] तर्षो[६] दन्या[७] धीतिः[८] पाने[९]ऽथ शोषणम्[१] ।
रसादानं[२] भक्षक[१]स्तु घस्मरो[२]ऽद्मर[३] आशितः[४](४) ॥५८॥
भक्त[१]मन्नं[२] कूर[३]मन्धो[४](५) भिस्सा[५] दीदिवि[६] रोदनः[७] ।
अशनं[८](६) जीवनकं[९] च याजो[१०] वाजः[११] प्रसादनम्[१२] ॥५९
भिस्सटा[१] दग्धिका[२] सर्व्वरसाग्रं मण्ड[१] मस्तु तु(७) ।
दधिजे मस्तु भक्तोत्थे निस्रावा[१]-चाम-मासराः[२] ॥६०॥

---

(१) प्रसरण शीलस्य ।

(२) रोचनं रोचतेऽस्मिन्निति वा रोचकः नाम्नि पुंसि चेति ।

(३) तृष्णाक् तृष्णजौ तृष्णजः ॥

(४) आशिता इति वा पाठः ।

(५) कूरमिति पुंक्ली, अन्धः अन्धसी अन्धांसि ।

(६) अशनं पुंक्ली, अशनं अशनः ॥

(७) मण्डं पुंक्ली, मस्तु क्ली, "दध्नस्तु यदधस्तोयं तन्मस्तु च निगद्यते" इति धन्वन्तरिः ॥ सर्व्वरसाग्र्यं इति वा पाठः ।

श्राणा[1] विलेपी[2] तरला[3] यवागू[4] रुष्णिका[5]ऽपि च ।
सूपः[1] स्यात् प्रहितं[2] सूदो[3] व्यञ्जनं[1] न्तु घृतादिकम् ॥६१॥
तुल्यौ तिलान्ने कृसर[1]-त्रिसरा[2](1)वथ पिष्टकः[1](2) ।
पूपो[2]ऽपूपः[3] पूलिका[1] तु पोलिका[2]-पोलि[3](3)-पूपिकाः[4] ॥६२
(4)पूपल्य[5] ये[6] घृतपक्वा श्शुष्कल्यूपा[1]-व्योप[2]-पौलयः[3] ।
(5)निष्ठानं[1] तु तेमनं[2] स्यात्करम्भो[1] दधिसक्तवः ॥६३॥
घृतपूरो[1] घृतवरः[2] पिष्टपूर[3] घृतार्त्तिक[4] ।
(6)चमसी[1] पिष्टवर्त्तिः[2] स्याद्वटक[1]स्तु वसेकिमः[2] ॥६४॥
भृष्टायवाः पुनर्धाना[1](7) धानाचूर्णं तु सक्तवः[1](8) ।

---

(1) कृसरः पुंक्ली, क्लीवेऽपि, वैजयन्ती यदाह "तिलतण्डुलमाषैस्तु कृसरास्त्रिसरास्त्वयीति" ॥ (2) पिष्टकः पुंक्ली ॥

(3) पौलि इति वा, 'किञ्चित् स्थूलाभवेयुश्च तेभ्यः पूपलिकाः स्मृताः । सैवाङ्गारेषु सम्पक्वा विज्ञेयाङ्गार-कर्कटी" पूलिकाद्याः पञ्च स्थूलमण्डपर्य्यायाः ॥

(4) इह प्रस्तावात् सामान्यतोऽनुक्तान्यपि पिष्टनामानि त्रीणि, पिष्टकः१ चमसः२ चूर्णश्च३ "पिष्टको नेत्ररोगे स्याद्धान्यादि चमसोऽपि चेति" महेश्वरः । चमसशब्दस्तु चमसीत्यत्र निर्ह्रीतोऽतस्तत एवावसेयः ।

(5) निष्ठानं पुंक्ली ।

(6) चमसी स्त्रीलिङ्गः, गौड़स्तु "चमसः पिष्टवर्त्तिः स्यादिति" पुंस्याह, चमसः पिष्टं चमसी मुद्गादिनिर्म्मिता इति हैमो यादि हैमधातु पारायणयोः सामान्यवचनात् चमसीशब्दो वडोत्यादि प्रसिद्धेऽपि "ष्टघ्रनो चमसी मसीति" अमरस्त्रीलिङ्गशेषः चमसीमसूरादिरित्याह क्षीरस्वामी ॥

(7) धानाः स्त्रीलिङ्गो बहुवचनान्तश्च ।

(8) सक्तुः पुंक्ली ।

पिच्छिलं[1] तु विजिविलं[2] विज्जलं[3] विजिलं[4](१) च तत्।
भावितं[1] तु वासितं[2] स्यात् तुल्ये संसृष्ट[1]-शोधिते[2] ॥७८॥
काञ्चिकं[1] काञ्जिकं[2] धान्याम्ला[3]-रनाले[4] तुषोदकम्[5]।
कुल्माषाभिषुता[6](२)-वन्तिसोम[7]-शुक्लानि[8] कुञ्जलम्[9] ॥७९॥
चुक्रं[10] धातुघ्न[11] म[illegible]ाम्लं[12] रक्षोघ्नं[13] कुण्डगोलकम्[14]।
महारसं[15] सुवीराम्लं[16] सौवीरं[17] म्रक्षणं[1](३) पुनः ॥८०॥
तैलं[2] स्नेहो[3](४)ऽभ्यञ्जनं[4] च वेसवारः[1] उपस्करः[2]।
स्यात्तिन्तिडीकं[1] तु चुक्रं[2] वृक्षाम्लं[3] चाम्लवेतसे[4] ॥८१॥
हरिद्रा[1] काञ्चनी[2] पीता[3] निशाख्या[4] वरवर्णिनी[5]।
क्षवः[1] क्षुताभिजननो[2] राजिका[3] राजसर्षपः[4] ॥८२॥
आसुरी[5] कृष्णिका[6] चासौ कुस्तुम्बुरु[1] तु धान्यकम्[2]।
धन्या[3](५) धन्याकं[4] धान्याकं[5] मरिचं[1](६) कृष्ण[2] मूषणम्[3] ॥८३॥
कोलकं[4] वेल्लजं[5] धर्मपत्तनं[6] यवनप्रियम्[7]।
शुण्ठी[1] महौषधं[2](७) विश्वा[3](८) नागरं विश्वभेषजम् ॥८४॥
वैदेही[1] पिप्पली[2] कृष्णो[3] पकुल्या[4] मागधी[5] कणा[6]।
तन्मूलं ग्रन्थिकं[1] सर्वग्रन्थिकं[2] चटकाशिरः[3] ॥८५॥
त्रिकटु[1] त्र्यूषणं[2] व्योषं[3] अजाजी[1](९) जीरकः[2] कणा[3]।
सहस्रवेधि[1] वाह्लीकं[2] जतुकं[3](१०) हिङ्गु[4] रामठम्[5] ॥८६॥

---

(१) विज्जिलं विजिलं-विज्जलविजलमतौ वा।

(२) कुल्माषे यवादिभि र्दधिमै रभिषूयते परिवास्यते तस्मात् कुल्माषाभिषुतं व्यस्तमपि तेन कुल्माषमभिषुतं चेति।

(३) म्रक्ष म्लेच्छने चुरादिः परस्मैपदी, अनटि म्रक्षणं स्यादौ[illegible] रोगे इत्येके। (४) स्नेहः पुंक्ली, स्नेहः स्नेहम्।

(५) धन्या आमलको स्त्रीलिङ्गः। (६) मरीचं इत्यपि।

(७) विश्वा स्त्रीक्ली विश्वा विश्वम्। (८) पुंक्ली।

(९) जीरकः पुंक्ली, जातुकं क्लीपुं॥

न्यादः[१] स्वदनं[२] खादन[३] मशनं[४]
निघसो[५] वल्भन[६] मभ्यवहारः[७]।
जग्धि[८] र्जमना[९]-भक्षणा[१०]-लेहाः[११]
प्रत्यवसानं[१२] घसि[१३] राहारः[१४] ॥८७॥

पाना[१५]-वधाना[१६]-विधाना[१७] भोजनं[१८] जेमना[१९]-दने[२०]।
चर्व्वणं[१] चूर्णनं दन्तै र्जिह्वास्वाद स्तु लेहनम् ॥८८॥
वाल्यवर्त्तः[१] प्रातराशः[२] सग्धि[१] स्तु सहभोजनम्[(१)] ॥
ग्रासो[१] गुडेरकः[२(२)] पिण्डो[३] गडोलः[४] कवको[५] गुडः[६] ॥८९॥
गण्डोलः[७(३)] कवल[८] स्तृप्ते[१] त्वाघ्रात[२(४)]-सुहिता[३]-शिताः
तृप्तिः[१] सौहित्य[२] माघ्राण[३(५)] मथ भुक्तसमुज्झिते[१(६)] ॥९०॥
फेला[२] पिण्डोलि[३] फेली[४] च स्वोदरं पूरके पुनः।
कुक्षिम्भरि[१] रात्मम्भरि[२] रुदरम्भरि[३] रप्यथ ॥९१॥
आद्यूनः[१] स्यादौदरिको[२] विजिगीषाविवर्ज्जिते[(७)]।
उदरपिशाचः[१] सर्व्वान्नीनः[२] सर्व्वान्नभक्षकः[३] ॥९२॥
शाष्कुलः[१] पिशिताशु[२] न्मादिष्णु[१] स्तून्मादसंयुतः।
गृध्नु[१] स्तु गर्द्धन स्तृष्णक्[३] लिप्सु[४] र्लुब्धो[५]ऽभिलाषुकः[६] ॥९३॥
लोलुपो[७] लोलुभो[८] लोभ[१] स्तृष्णा[२] लिप्सा[३] वशः[४] स्पृहा[५]।
काङ्क्षा[६] शंसा[७] गर्द्ध[८] वाञ्छा[९] शे[१०] च्छे[११] हा[१२] तृट्[१३] मनोरथाः[१४] ॥९४॥
कामो[१५(८)]ऽभिलाषो[१६]ऽभिध्या[१] तु परस्वेहो हृतः[१] पुनः।
अविनीतः[२] विनीत[१] स्तु निभृतः[२] प्रसृतो[३]ऽपि च ॥९५॥

---

(१) सग्धि स्त्री। (२) पिण्डः पुंक्ली। (३) कवलः पुंक्ली।
(४) आघ्रातः इति वा। (५) आघ्राण इति वा।
(६) भुक्तोच्छिष्टम् उच्छिष्टं चान्न॥
(७) विजेतु मिच्छा विजिगीषा तया विवर्ज्जितो तस्मिन्।
(८) अभिलाषः पुंक्ली।

(१)विधेये विनयस्थः[२] स्यादा(२) श्रवो[१](३) वचनेस्थितः ।
वश्यः[१] प्रणेयो[२] धृष्टस्तु, वियातो[२] धृष्णु-धृष्णजौ[४] ॥९६॥
वीध्रापन्नो[१](४) विलक्षो[२] स्या ऽधृष्टे[१] शालीन[२]-शारदौ[३] ।
(५)शुभंयुः[१] शुभसंयुक्तः स्या दहंयु[१] रहङ्कृतः[२] ॥९७॥
कामुकः[१] कमिता[२] कम्नो[३] ऽनुकः[४] कामयिता[५] ऽभिकः[६] ।
कामनः[७] कमरो[८] ऽभीकः[९](६) पक्षभद्र[१] स्तु विश्रुतः[२] ॥९८
व्यसनी[२](७) हर्षमाणा[१] स्तु प्रमना[२] हृष्टमानसः[३] ।
त्रिकुर्व्वाणो[४] विचेता[१] स्तु दु-रन्त-र्व्वि-परो मनाः[४](८) ॥९९
मत्तो[१] शौण्डो[२]-त्कट[३]-क्षीवा[४] उत्क[१] स्तु तु त्सुक[२] उन्मनाः[३] ।
उत्कण्ठितो[४] ऽभिशस्तो[१] तु वाच्य[२]-चारित[३]-दूषिताः[४] ॥१००
गुणैः प्रतीते(९) त्वा हतलक्षणः[१] क्षतलक्षणः[२] ।
निर्लक्षण[२] स्तु पाण्डुरपृष्ठः सङ्कसुको[१] ऽस्थिरे[२](१०) ॥१०१।

---

(१), स्वगतो क्त प्रत्ययेऽनुसारे त्वाह्वेट "तस्यैवमेऽनुरक्तस्य प्रहृतस्य हतैनस,, इति भागवतम् । प्रहृतस्य विनीतस्येति तट्टीका ।

(२) आज्ञाकारिणः विधेयो विनयस्थश्च नामद्वयम् ॥

(३) आश्रवाः इति वा इष्वाऔ इति वा ।

(४) वीध्रशब्दोऽन्नस्याद्यमोऽन्तस्याद्य रहितोपि अतो वीध्रापन्नः वीध्रापन्न इत्यमथं भवति "वीध्रापन्नः सविस्मय,, इति हारावली ॥

(५) शुभं योऽपीति हलायुध टीका ।

(६) कमनोऽभीकः इति वा पाठः । (७) इत्यन्तः ।

(८) दुर्म्मनाः१ अन्तर्म्मनाः२ विमनाः३ दुर्म्मनसौ विचेतसौ उन्मनसौ इत्यादि ।

(९) प्रख्याते इत्यर्थः, आहतलक्षणः षड्गुणसमलक्षणं नाम "इक्ष्वाकुवंश्यः ककुदं नृपाणां काकुत्स्थ इत्याहतलक्षणोऽभदिति" रघुः ।

(१०) संकुसिकोऽ इति वा, अनिश्चिते इति क्षीरस्वामी ।

सह्रा ञ्चति तु सध्यङ्[1] स्यात्तिर्य्यङ्[१]·पुन स्तिरो ञ्चति ॥१०८॥
शंशयालुः[1] संशयिता[2] गृहयालु र्गृहीतरि[2 1)]।
पतयालुः[1] पातुकः[2] स्यात्समौ रोचिष्णु[1] रोचनौ[2 2)]॥१०९॥
दक्षिणार्ह[1]स्तु दक्षिण्यो[2 3)] दक्षिणीयो[1] ऽथ दण्डितः[1]।
दापितः[2] साधितो[1] ऽर्च्य[1]स्तु प्रतीष्यः[2] पूजितो ऽर्हितः[2] ॥११०॥
नमस्यितो[3] नमसितो[4]-ऽपचितो[5] ऽञ्चितो[6] ऽर्च्चितः।
पूजा[1] ऽर्हणा[2] सपर्य्या[3]ऽर्चा[4] उपहार[1]-बली[2] समौ[(4)]॥१११॥
विलावो[1] विह्वलः[2] स्थूलः[1] पीवा[2(5)] पीन[3] स्च पीवरः[4)6)]।
चक्षुष्य[1] सुभगो[2] द्वेष्यो[1] ऽक्षिगतो[2 7)] ऽथां सलो[1]बली ॥११२॥
निर्द्दिग्धो[2] मांसलो[4] ऽपचितो[5] ऽथ दुर्बलः[1] कृशः[2]।
क्षामः[3] क्षीणो[4] स्तनु[5] श्छात[6]स्तलिना[7]-मांस[8]-पेलवाः[8]॥११३

विष्वद्रीची, यन्माघः "विष्वद्रीची विविधपम् सैन्यवीचीः" । पूजायां ग-
ञ्चादौ विष्वद्रञ्चः विष्वग्ञ्चा। विष्वञ्चश्यामित्यादि। स्त्रियां विष्व-
ग्ञ्ची नदीवत्। क्लीवेपि विष्वग् विष्वग्न्यक् विष्वद्रीची विष्वद्रञ्चि।
विष्वक् इति सर्वतोऽर्थेऽव्ययम् अञ्चते रञ्चायां नलोपः द्यु नागमश्च
अञ्चायाम नलोपाभावः एवमग्रेतनेष्वपिद्रष्टव्यम्। देवमञ्चति गच्छति
अर्च्चति वा देवद्यङ्। सहाञ्चति गच्छत्यर्चति वा सध्यङ्। तिर्य्यगञ्च-
तीति गच्छतीति तिर्य्यङ् ॥

(१) गृहीतरि इति वा। (२) रोचिनौ इत्यपि।

(३) दक्षिण्यो दक्षिणी ॥

(४) "कुर्व्वन्नमन्य्यावलिपटङ्कतां भूलिनि श्लाघनीयामिति" कालि-
दासः, "उपहारो बलिःस्मृत" इति हलायुधः। देवार्थे निर्हितनैवेद्य
इति तट्टीका, बलीति पुंस्त्री, बलिः बलीतिरूपम् ॥

(४) पीयानौ पीवानः ॥

(५) इष्टिसुखदर्शियस्य द्वे। (६) इष्टिदुःखद अप्रियस्यापि द्वे।

पिचण्डिलो¹ बृहत्कुक्षि² स्तुन्दि³-तुन्दिक⁴-तुन्दिलाः⁵ ।
उदर्यु⁶ दरिले⁷ चिखृ¹-चिखु²-चिप्रा³- अनासिके ॥११४॥
नतनासिकेऽवनाटो¹ ऽवटीटो² ऽवभ्रटो³ ऽपि च ।
(१)खरणा¹ स्तु खरणसो² नः क्षुद्रः¹ क्षुद्रनासिकः(२) ॥११५॥
खुरणाः(३) स्यात् खुरणस² उन्नस¹ स्तू ग्रनासिकः ।
पङ्गुः¹ श्रोणः² खलति¹ स्तु खल्वाट² ऐन्द्रलुप्तिकः³ ॥११६॥
शिपिविष्टो⁴ बभ्रु⁵ रथ(४) काणः¹ कनन² एकदृग्³ ।
पृश्नि¹ रल्पतनौ² कुब्जो¹ गडुलः² कुकरे¹ कुणिः² ॥११७॥
निखर्वः¹ खट्टनः²(५) खर्वो³ खर्वशाख⁴ श्च वामनः⁵ ।
(६)अकर्ण¹ एडो² बधिरो³ दुश्चर्मा¹ तु द्विनग्नकः² ॥११८॥
षण्ड² श्च शिपिविष्ट⁴ श्च खोड¹-खोरौ² तु खञ्जके³ ।
विकलाङ्ग¹ स्तु पोगण्ड² ऊर्ध्वज्ञु¹ रूर्ध्वजानुकः² ॥११९॥
(७)ऊर्ध्वज्ञ² स्या दथ प्रज्ञु¹(८) प्रज्ञौ² (९)विरलजानुके ।

(१) खरणसौ खरणासः । (२) क्षुद्राऽल्पानासिकाऽस्य विग्रहः।
(३) खुरणसौ खुरणसः इत्यादि । (४) बभ्रुरथ इत्येकं पदं वा ।
(५) "खट्टम् संवरणे" खट्टयति खट्टनः। खट्टतः इति वा पाठः ।

(६) असंपूर्णत्वात् निन्दितं शेफाग्रस्य चर्म अस्य दुश्चर्मा, अग्रसिद्धत्वात् निराच्छादनत्वाच्च छिन्नो द्विनग्नकः, षण्डतेऽपि धत्ते षण्डः वण्डस्य इति वा ।

(७) ऊर्ध्वज्ञुरित्यपि, यन्माघे एकादशसर्गः "परिशिथिलित कर्णग्रीवमामीलिताक्षः क्षणमयमनुभूय स्वप्नमूर्ध्वज्ञुरेव रिरसयिषति भूयः शष्पमग्रे विकीर्णं पटुतर चपलौष्ठं प्रस्फुरत्प्रोथमश्वः ॥"

(८) प्रगते प्रबद्धे प्रसृते प्रकृष्टे जानुनी अस्य, प्रज्ञुः प्रज्ञः इति दर्शनात् प्रज्ञुजानुकाद्या अप्युच्यन्ते ॥

(९) विरले वातादिदोषात् जानुनी अस्य विरलजानुकस्तस्मिन् ।

संकु[1]-संज्ञौ[2] सुतजानौ वलिनो[1] वलिभः[2] समौ ॥१२०॥
उदग्रदन्[1(1)] दन्तुरः[2] स्यात् प्रलम्बाण्ड[1]स्तु मुष्करः[2] ।
अन्धो[1] गताक्ष उत्पश्य[1] उन्मुखो[2]ऽधोमुख[1]स्त्ववाङ्[(2)] ॥१२१॥
मुण्ड[1]स्तु मुण्डितः[2] केशी[1(3)] केशवः[2] केशिको[3]ऽपि च ।
वलिरः[1] केकरो[2] वृद्धनाभौ[1] तुण्डिल[2] तुण्डिभौ[3] ॥१२२॥
आमयावी[1] पटु[2]र्ग्लानो[3] ग्लास्नु[4] र्विकृत[5] आतुरः[6] ।
व्याधितो[7]ऽभ्यमितो[8]ऽभ्यान्तो[9] दद्रुरोगी[1] तु [(4)]दद्रुणः[2] ॥१२३॥
वामनः[1] कच्छुर[2]स्तुल्यौ सातिसारो[1]ऽतिसारकी ।
वातकी[1] वातरोगी[2] स्यात् श्लेष्मलः[1] श्लेष्मणः[2] कफी[3] ॥१२४॥
क्लिन्ननेत्रे[1] चिल्ल[2] चुल्लौ[3] पिल्लो[4]ऽथार्शोयु[1] गर्शसः[2] ।
मूर्च्छिते[1] मूर्त्त मूर्च्छालौ[2] सिध्मल[1]स्तु किलासिनि[2] ॥१२५॥
पित्तं[1] मायुः[2] कफः[1] श्लेष्मा[2] बलाशः[3] स्नेहभूः[4] खटः[5] ।
रोगो[1] रुजा[2] रुगा[3]तङ्को[4] मान्द्य[5]व्याधि[6]रपाटवम्[7] ॥१२६॥
आम[8] आमय[9] आकल्य[10]-मुपतापो[11] गदः[12] समाः ।
क्षयः[1] शोषो[1] राजयक्ष्मा[3] यक्ष्मा[4]ऽथ क्षुत्[1(5)] क्षुतं[2] क्षवः[3] ॥१२७
कासस्तु[1] क्षवथुः[2] पामा[1(6)] खसः[2] कच्छू[3]र्विचर्चिका[4] ।

(१) उदग्र दन्तौ उदग्र दन्तः इत्यादि ॥ (२) अवाञ्चौ अवाञ्चः इत्यादि रूपम् ॥ (३) केशी इन्नन्तः वलातिशयं वक्रदृष्टेः ॥

(४) दीर्यतेऽनया इति दद्रुः कृञ्भेदः "दृ विदारणे" दृभ्यां द्रुरिति द्रुः रोगार्त्ति, सा अस्त्यस्य दद्रुणः शाकीपलालीदद्र्वो ह्रस्वश्चेति न प्रत्ययः, एतौ द्वौ स्त्रीलिङ्गौ दद्रु दद्रुशब्दौ, दद्रु रोगी ॥

(५) स्त्री, क्षुतौ क्षवः ॥

(६) पामा इत्याबन्तोऽपि गङ्गाधरस्तु "पामनामे विचर्चिका" इत्यमरः क्षवथुः इति वा पाठः ॥

कण्डूः[१] कण्डूयनं[२] खर्जूः[३] कण्डूया[४] ऽथ क्षतं[१] व्रणः[२]॥१२८॥
(१)अरुः[३] ईर्मं[४] व्रणानु[५] स्त रूढ़व्रणपदं किणः[१]।
श्लीपदं[१] पादवल्मीकः[२] पादस्फोटो[१] विपादिका[२]॥१२९॥
स्फोटकः[१] पिटकः[२] गण्डः[३] पृष्ठग्रन्थिः[१] पुनर्गडुः[२](२)।
श्वित्रं[१] स्यात् पाण्डुरं[२] कुष्ठं[१] केशघ्नं[१] त्विन्द्रलुप्तकम्[२]॥१३०॥
सिध्म[१](३) किलासं[२] त्वक्पुष्पं[३] सिध्मं[४](४) कोठ[१]स्तु मण्डलम्
गलगण्डो[१] गण्डमाला[२] रोहिणी[१] तु गलाङ्कुरः[२]॥१३१॥
हिक्का[१] हेक्का[२] च हृल्लासः[३] प्रतिश्याय[१]स्तु पीनसः[२]।
शोथ[१]स्तु(५)श्वयथुः[२] शोफः[३] दुर्ना[१]मार्शो[२] गुदाङ्कुरः[३]॥१३२॥
छर्दे[१] प्रच्छर्दिका[२](६) छर्दि[३] र्वमथु[४] र्वमनं[५] वमिः[६]।
गुल्मः[१] स्यादुदरग्रन्थि[२] रुदावर्तो[१] गुदग्रहः[२]॥१३३॥
गति[१] र्नाड़ीव्रणो[२] वृद्धिः[१] कुरण्ड[२](७) श्चाण्डवर्द्धने।
अश्मरी[१] स्यात् मूत्रकृच्छ्रे[२] प्रमेहो[१] बहुमूत्रता॥१३४॥
(८)अनाह[१]स्तु विबन्धः[२] स्याद् ग्रहणीरुक्[१] प्रवाहिका[२]।

---

(१) अरुः व्यञ्जन दन्त्यान्तः अरुषी अरूंषि, वैजयन्तीकारस्तु 'व्रणो-ऽर्मोऽपि न स्त्रियां" इति पुंस्यप्याह नाड़ीव्रणः पुमानित्यमरः॥

(२) पङ्कोपि, गडुः पुं॥ (३) क्ली, सिध्मनी सिध्मानि, नान्तः सिध्म॥

(४) अथ मकारान्तः, सिध्मे सिध्मानि। मण्डलं त्रिषु॥

(५) शोथोऽस्त्रीति वैजयन्ती तस्मात् क्लीबेऽपि, श्वयथुः पुं, दुर्नाम्नी दुर्नामनी दुर्नामानि, नान्तः क्ली, अर्शसी अर्शांसि, सान्तः॥

(६) स्त्री क्ली, छर्दे प्रच्छर्दिका इति वा पाठः, छर्दिः स्त्री, वमथुः पुं, वमिः स्त्री, गुल्मः पुं स्त्री॥

(७) कुकुण्डः इति वा पाठः।

(८) इयं कोष्ठबद्धस्य। आनाहस्तु निबन्धः स्यादिति पाठोऽपि॥

व्याधिप्रभेदा विद्रधि-[१]भगन्दर[२]-ज्वरा[३]-दयः ॥१३५॥
दोषज्ञ[१]स्तु [२]भिषग्[२] वैद्य[३] आयुर्वेदी[४] चिकित्सकः[५] ।
रोगहार्य्य[६] गदङ्कारो[७] भेषजं[१] तन्त्र[२] मौषधम्[३] ॥१३६॥
भैषज्य[४]मगदो[५] जायु[६] [३]श्चिकित्सा[१] रुक्प्रतिक्रिया[२] ।
उपचर्य्यो[३]-पचारौ[४] च [४] लङ्घनं[१]त्वपतर्पणम्[२] ॥१३७॥
जाङ्गुलिको[१] विषभिषक् स्वास्थ्यं[१] वार्त्त[२]मनामयम्[३] ।
सह्या[४]-रोगज्ञ[५] पटू[१]-ल्लाघ[२]-वार्त्त[३]-कल्या[४]स्तु नीरुजि[५] ॥१३८
कुसृत्या विभवान्वेषी पार्श्विकः[१] सन्धिजीवकः[२] ।
सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुदः[१] ॥१३९॥
चपल[१]श्चिकुरो[२] नीलीराग[१]स्तु [५]स्थिरसौहृदः ।
ततो हरिद्रारागो[१]ऽन्यः सान्द्रस्निग्धस्तु मेदुरः[२] ॥१३०॥
[६]गेहेनर्दी[१] गेहेशूर[२] पिण्डीशूरो[३]ऽस्तिमान्[१] धनी[२] ।
स्वस्थानस्थः परद्वेषी गोष्ठश्वो[१]ऽथापदिस्थितः ॥१४१॥
आपन्नो[१]ऽथाप[१]द्विपत्ति[२]र्विपत्[३] स्निग्ध[१]स्तु वत्सलः[२] ।
उपाध्य[१]-ध्यागारिकौ[२] तु कुटुम्बव्यापृते नरि ॥१४२॥
जैवातृक[१]स्तु दीर्घायु[२]स्त्वामदायी तु शङ्कुरः[१] ।
अभिपन्नः[१] शरणार्थी कारणिकः[१] परीक्षकः[२] ॥१४३॥
समर्द्धुक[१]स्तु वरदो[२] व्रातीनाः[१] सङ्घजीविनः[२] ।

(१) एकैकम् विद्रधिः स्त्री । (२) भिषक् भिषजौ भिषजः औषधं पुं क्लीं ॥
(३) जायुः पुं ॥ (४) उपचारोपचार्य्यौ च इति वा पाठः ॥
(५) "नीलीरागः स विज्ञेयः स्थिरप्रेमा च यः पुमानिति" हलायुधः ।
(६) गेहेनर्दिनौ गेहेनर्दिनः इत्यादि ॥
(७) अस्तिमन्तौ अस्तिमन्तः अल्पधनवतः ॥

सभ्याः[१] सदस्याः[२] पार्षद्याः[३] सभास्ताराः[४] सभासदः[५] ॥१४४

सामाजिकाः[६] सभा[१] संसत्[२] समाजः[३] परिष[४] त्सदः[५][(१)] ।

पर्ष[६]-त्समज्या[७]-गोष्ठ्या[८]-स्था[९] आस्थानं[१०] समिति[११] र्घटा ॥१४५

सांवत्सरो[१] ज्यौतिषिको[२] मौहूर्त्तिको[३] निमित्तवित्[४] ।

दैवज्ञ[५]-गणका[६]-देष्टृ[७]-ज्ञानि[८]-कार्त्तान्तिका अपि ॥१४६॥

विप्रश्निके[१०]-क्षणिकौ[११] च सैद्धान्तिक[१] स्तु तान्त्रिकः[२] ।

लेखके[१] ऽक्षरपूर्वाः स्यु[(२)]श्चणा[२]-जीवक[३] चुञ्चवः[४] ॥१४७॥

वार्णिको[५][(३)] लिपिकर[६] श्चाक्षरन्यासे लिपि[१] र्लिविः[२][(४)] ।

मषिधानं[१] मषिकूपी[२] मलिनाम्बु[१] मषी[२] मसी[३][(५)] ॥१४८॥

कुलिक[१] स्तु कुलश्रेष्ठी[२] सभिको[१] द्यूतकारकः[२] ।

कितवो[१] द्यूतकृद्[२] धूर्त्तो[३] ऽक्षधूर्त्त[४] श्चाक्षदेविनि[५] ॥१४९॥

[(६)]दुरोदरं[१] कैतवं[२] च द्यूत[३] मक्षवर्त[४] पणः[५] ।

पाशकः[१] प्रासको[२][(७)] ऽक्ष[३]श्च देवन[४] स्तत्पणो ग्लहः[२][(८)] ॥१५०॥

अष्टापदः[१] शारिफलं[२] शारः[१] शारि[२] श्च खेलनी[३][(९)] ।

परिणाय[१] स्तु शारीणां नयनं स्यात् समन्ततः ॥१५१॥

---

(१) स्त्री क्ली, सदः सदसी सदसः। स्त्री। सदः सदसी सदांसि इति क्ली ॥

(२) अक्षरचणः १ अक्षरजीवकः २ अक्षरचुञ्चुः ३ अक्षर चञ्चुरित्यपि ॥

(३) वर्णिकः इति वा पाठः ॥

(४) इह ग्रन्थादनुक्तान्यपि लेखनी नामानि त्रीणि लेखनी शलाकिका कलमश्च तथा च हारावली "लेखनी वल्लकिका" इति ॥

(५) मसी नामानि त्रीणि । (६) दुरोदरं कैतवञ्च पुं क्ली ॥

(७) प्रासकः असु क्षेपणे दिवादिः ॥

(८) तत्तेषु अक्षेषु पणो ग्लहो जय्यत्वेन स्थापितं धनमित्यर्थः ॥

(९) पुं क्ली, गुटिकाया नाम त्रीणि ॥

समाह्वयः[1] प्राणिद्यूतं व्यालग्राह्या[1]हि तुण्डिकः[2] ।
स्यान्मनोजवसः[1](1) ताततुल्यः शाला[1](2) तु दैशिकः[2] ॥१५२
सुकृती[1] पुण्यवान्[2] धन्यो[3] मितम्पचु[1] मितव्ययः ।
क्षेमङ्करो[1]ऽरिष्टतातिः[2] शिवतातिः[3] शिवङ्करः[4] ॥१५३॥
श्रद्धालु[1] रास्तिकः[2] श्राद्धो[3] नास्तिक[1] स्तद्विपर्यये ।
वैरङ्गिको[1] विरागार्हो[2] वीतदम्भ[1] स्त्वकल्कनः[2] ॥१५४॥
प्रणाय्यो[1]ऽसम्मतो[2]ऽन्वेष्टा[1](3)ऽनुपदी च सहः[1] क्षमः[2] ।
शक्तः[3] प्रभूष्णु[4](4) र्भूतात्त[1] स्त्वाविष्टः[2] शिथिलः[1] श्लथः[2] ॥१५५॥
सम्बाहको[1]ऽङ्गमर्दः[2] स्यान्नष्टबीज[1] स्तु निष्कलः[2] ।
आसीन[1] उपविष्टः[2] स्यादूर्द्ध्व[1] ऊर्द्ध्वन्दमः[2] स्थितः[3] ॥१५६॥
अध्वनीनो[1]ऽध्वगो[2]ऽध्वन्यः[3] पान्थः[4] पथिक[5]-देशिकौ[6] ।
प्रवासी[7] तद्गणो हारिः[1](5) पाथेयं[1] सम्बलं[2] समे ॥१५७॥
जङ्घालो[1]ऽतिजवो[2] जङ्घाकरिको[1] जाङ्घिको[2] जवी[1](6) ।
जवन[2] स्त्वरिते[3] वेगो[1] रयो[2] रंहः[3] स्तरः[4] स्यदः[5] ॥१५८॥
जवो[6] वाजः[7] प्रसर[8] श्च(7) मन्दगामी[1] तु मन्थरः[2](8) ।
कामङ्गाम्य[1] नुकामीनो[2]ऽत्यन्तीनो[1]ऽत्यन्तगामिनि[2] ॥१५९॥

---

(1) मनोजवसस्तातरसीयमित्यन्ये यद्व्याडिः "जनः पितृसधर्मा यः स तातार्हो मनोजव" इति ॥ (2) शालारौ शालारः । दैशिकोऽपि ॥

(3) अन्वेष्टारौ अन्वेष्टारः । अनुपदी अनुपदिनौ अनुपदिनः ॥

(4) समर्थस्य चत्वारि । (5) हारिः स्त्री । सम्बलं पुंक्लीं ॥

(6) जविनौ जविनः ॥

(7 प्रसरान्तानि वेगनामानि तत्र, रंहसी रंहांसि तरसी तरांसि ॥

(8) मन्दगामिनिद्वयम् ॥

सहायो ऽभिचरो[२] ऽनुश्च जीवि[३]-गामि[४]-चर[५]-प्लवाः[६(१)]।
सेवको[७] ऽथ सेवा[१] भक्तिः[२] परिचर्या[३] प्रसादनं[४] ॥१६०॥
शुश्रूषा[५]-राधनो[६]-पास्ति[७]-वरिवस्या[८]-परीष्टयः[९]।
उपचारः[१०] पदाति[१]स्तु पत्तिः[२] पद्गः[३] पदातिकः[४] ॥१६१॥
पादातिकः[५] पादचारी[६] पदाजि[७]-पदिका[८] वपि ॥
सरः[१] पुरो-ऽग्रतो-ऽग्रेभ्यः पुरस्तो गम[४] गामि[५]-गाः[६(२)] ॥१६२॥
प्रष्ठो[७] ऽथ वेश्मिका[१]-गन्तू[२] प्राघुणो[३(३)] ऽभ्यागतो[४] ऽतिथिः[५]।
प्राघूर्णको[६(४)] ऽथ वेश्मिक[१] मातिथ्यं[२] चातिथेय्य[३]पि(५) ॥१६३॥
सूर्योढ[१]स्तु स सम्प्राप्तो यः सूर्येऽस्तङ्गते ऽतिथिः।
पादार्थं पाद्य[१] मर्घार्थं मर्घ्यं[१] वार्थ्यथ गौरवम् ॥१६४॥
अभ्युत्थानं[२] व्यथक[१]स्तु स्यान्मर्मस्पृग[२] रुन्तुदः[३]।
ग्रामेयके[१] तु ग्रामीण[२] ग्राम्यौ[३] लोको[१] जनः[२] प्रजा[३] ॥१६५॥
स्यादामुष्यायणो[१] ऽमुष्यपुत्रः[२] प्रख्यातवप्तृकः[३]।
कुल्यः[१] कुलीनो[२] ऽभिजातः[३] कौलेयक[४] महाकुलौ[५] ॥१६६॥
जात्यो[६] गोत्रं[१] तु सन्तानो[२] ऽन्ववायो[३] ऽभिजनः[४] कुलम्[५]।
अन्वयो[६] जननं[७] वंशः[८] स्त्री[१] नारी[२] वनिता[३] वधूः[४] ॥१६७॥
वशा[५] सीमन्तिनी[६] वामा[७] पर्णिणी[८] महिला[९(६)] ऽबला[१०]।
योषा[११] योषित्[१२] विशेषा स्तु (७)कान्ता[१] भीरु[२] नितम्बिनी[३]॥

---

(१) अनुजीवो १ अनुगामी २ अनुचरः ३ अनुप्लवः ४ ॥

(२) पुरःसरः १ अग्रतःसरः २ अग्रेसरः ३ पुरोगमः १ पुरोगामी २ पुरोगः ३ । (३) प्रघूर्ण इति वा । (४) प्रघुर्णिको इति वा ॥

(५) आतिथ्ये वीति स्त्री क्ली, आतिथेयि इति क्लीवे रूपम् ॥

(६) महेलामपि । (७) एकैकम् बोध्यम् ॥

प्रमदा[४] सुन्दरी[५] रामा[६] रमणी[७] ललना[८]ऽङ्गना[९] ।
स्वगुणेनोपमानेन मनोज्ञादिपदेन च ॥१६९॥
विशेषिता-ङ्ग-कर्म्मा स्त्री यथा तरललोचना[१](१) ।
अलसेक्षणा[२] (२)मृगाक्षी[३] मत्तेभगमना[४]ऽपि च ॥१७०॥
वामाक्षी[५] सुस्मिता[६]ऽस्याः स्वं मान[१]-लीला[२]-स्मरा[३]-दयः(३)।
लीला[१] विलासो[२] विच्छित्ति[३] र्विव्वोकः[४] किलिकिञ्चितम्[५] ॥१७१॥
मोट्टायितं[६] कुट्टमितं[७] ललितं[८] विहृतं[९] तथा ।
विभ्रम[१०] श्चेत्यलङ्काराः स्त्रीणां स्वाभाविका दश(४) ॥१७२॥

---

(१) स्वकीयेनासाधारणेन गुणेन यथा तरललोचना अलसेक्षणा इत्यत्र तरलत्वं लोचनस्यासाधारणम्, अलसं मीक्षणं यस्याः अत्र क्रियायाः असाधारणम्, उपमानं यथा मृगाक्षी मत्तेभगमना, मनोज्ञादि पदेन यथा, वामे मनोज्ञे अक्षिणी यस्याः आदिशब्दात् सुस्मितादयः अत्र शोभनत्वे तस्मिन् क्रियायाः विशेषणम् ॥ स्त्रीविशेषणामेकैकम् ॥

(२) तरललोचना इत्यत्र लोचनस्य तरलत्व गुणो विशेषणम् अलसेक्षणा इत्यत्र ईक्षणा क्रियायाः अलसत्व गुणः विशेषणम् । मृगाक्षीत्यत्र अक्ष्णः उपमानं मत्तेभगमनेत्यत्र गमनक्रियायाः उपमानम् । वामाक्षीत्यत्र अक्ष्णः वामत्वं मनोज्ञत्वं विशेषणं सुस्मितेत्यत्र स्मितक्रियायाः शोभनत्वं विशेषणम् । एवं स्वगुणेन विशेषिताङ्गा तरललोचना । स्वगुणेन विशेषितकर्म्मा अलसेक्षणा । उपमानेन विशेषिताङ्गा मृगाक्षी । उपमानेन विशेषितकर्म्मा मत्तेभगमना । मनोज्ञपदेन विशेषिताङ्गा वामाक्षी । मनोज्ञपदेन विशेषितकर्म्मा सुस्मिता ।

(३) अस्याः स्त्रीयाः मानोऽभिमानः लीला शृङ्गार चेष्टाविशेषः स्मरः कामः ॥

(४) लीलाद्या एकैकं, स्त्रीणां स्वाभाविका लीलाद्या दशालङ्काराः तेषां लक्षणानि ॥ "प्रियस्यानुकृति र्लीलाश्लिष्टा मागवेष चेष्टितैः (१)

(१)प्रागल्भ्यौ[1]-दार्य्य[2]-माधुर्य्य[3]-शोभा[4]-धीरत्व[5]-कान्तयः[6] ।
दीप्ति[7]श्चा यत्नजा भाव[1]-हाव[2]-हेला[3] स्त्रयो ऽङ्गजाः(२)॥१७४॥
सा कोपना भामिनी[1] स्यात् छेकामत्ता च वाणिनी(३) ।
कन्या[1] कनी[2] कुमारी[3] च गौरी[1] तु नग्निका[2]ऽरजाः॥१७५॥
मध्यमा[1] तु दृष्टरजा[2] स्तरुणी[3] युवति[4] श्चरी[5] ।

---

विलासोऽङ्गे विशेषो यः प्रियाप्ता वासनादिषु (२) मण्डनाद्यादरन्यासो विच्छित्ती रूपदर्पतः (३) विब्बोकोऽभिमतप्राप्तावपि गर्व्वादनादरः (४) हर्षाद्रुदितगीतादिव्यामिश्रं किलिकिञ्चितम् (५) मोटायितं प्रियं स्मृत्वा साङ्गभङ्ग विजृम्भणम्। "मुठ प्रमर्दने भौवादिकः, मुटव आक्षेपमर्दनयोः तौदादिकः, पुटमुटण् सञ्चूर्णने चुरादिः, एषां मोटः मोटमिवाचरतीति मोटायते इति मोटायितमेकटकारोऽद्विटकारोऽपि पाठः"(६)दुःखोपचारः सौख्येऽपि हर्षात् कुट्टमितं मतम् (कुट्टण कुत्सनादौ चुरादिः,कुट्टमितं सख्यापुत्वे कुट्टमितम् अधरादिग्रहणात् दुःखपिवर्धः ) (७) अनाचार्य्योपदिष्टं स्याल्ललितं रतिचेष्टितम् । मसृणाङ्गन्यासः (८) वक्तव्या भाषणं व्याजाद्विहृतं दर्शितेङ्गितम् । (९) चित्तहृष्यनवस्थानं शृङ्गारादिभ्रमोमतः। (१०) इत्थेवमलंक्रियन्ते एभिरित्यलङ्काराः,स्त्रीणामिति न पुंसां रतिभावाद्धृदयगोचरीभूताद्भवन्ति स्वाभाविकास्ते च दशसंख्याः स्युरिति ॥

(१) प्रगल्भस्य प्रौढ़स्य भावः प्रागल्भ्यं सम्प्रयोगे निर्भयत्वमित्यर्थः ॥

(२) भ्रू तारकादीनां बहुविकारो हावः (१) अङ्गस्याल्पोविकारो भावः (२) अङ्गस्य प्रचुरो विकारो हेला (३).अङ्गजास्त्वङ्गोऽलङ्कारा इति मङ्गरतः• "अलङ्काराश्च नाट्यज्ञै र्ज्ञेया भावरसाश्रयाः । यौवनेऽभ्यधिका स्त्रीणां विकारा वक्त्रगात्रजाः" इति । "देहात्मकं भवेत् सत्वाद्भावः (१) समुत्थितः । भावात्समुत्थितो हावो (२) हावाद्धेला (३) समुत्थित" इति च व एव ॥

(३) छेका अवसरज्ञा, मत्ता च उन्मतवा ॥

तलुनी[६] दिकरी[७] वर्य्या[१] पतिंवरा[२] स्वयम्बरा[३](१) ॥१७५॥
सुवासिनी[१] वधूटी[२] स्या(२)च्चिरिण्ट्य[३]थ सधर्म्मिणी ।
पत्नी[२] सहचरी[३] पाणिगृहीती[४] गृहिणी[५] गृहाः[६] ॥१७६॥
(३)दाराः[७] क्षेत्रं[८] वधू[९]र्भार्य्या[१०] जनी[११] जाया[१२] परिग्रहः[१३]
द्वितीयो[१४]ढा[१५] कलत्रञ्च[१६] पुरन्ध्री[१] तु कुटुम्बिनी[२] ॥१७७
प्रजावती[१] भ्रातृजाया[२](४) सूनोः स्नुषा[१] जनी[२] वधूः[३] ।
भ्रातृवर्गस्य या जाया यातर[१](५) स्ताः परस्परम् ॥१७८॥
वीरपत्नी[१] वीरभार्य्या[२] कुलस्त्री[१] कुलबालिका[२](६) ।
(७)प्रेयसी[१] दयिता[२] कान्ता[३] प्राणेशा[४] वल्लभा[५] प्रिया[६] ॥१७९
हृदयेशा[७] प्राणसमा[८] प्रेष्ठा[९] प्रणयिनी[१०] च सा ।
प्रेयस्या[११]-द्याः पुंसी पत्यौ भर्त्ता[२] सेक्ता[३] पति[४]र्वरः[५] ॥१८०
विवोढा[६] रमणो[७] भोक्ता[८] रुच्यो[९] वरयिता[१०] धवः[११] ।
जन्या[१]स्तु तस्य सुहृदो विवाहः[१] पाणिपीडनम् ॥१८१॥
पाणिग्रहण[३]मुद्वाह[४] उपयाम[५]-यमा[६]वपि ॥

---

(१) कन्येति त्रयं सामान्यतः कन्यानामनि गौरीति, इयम् अष्टवर्षीय कन्यानामनि, यर्तिस्त्रियां सप्त, विवाहोत्सुकायां त्रीणि ॥

(२) क्षुद्रवधूनामनि इयम् । कलत्रान्तं भार्य्यायाम् ॥

(३) दाराः पुल्लिङ्गो बहुवचनान्तश्च, एकवचनान्तोऽपि दृश्यते ॥

(४) भ्रातुर्जायेत्यत्र "ऋतां विद्यायोनिसम्बन्धे" इति षष्ठ्यलोपः दृश्यमि भ्रातृजायामित्यादौ षष्ठी समासः । भ्रातृजायापि, यदाह रघुवंशम् "रथात्सुमन्त्र प्रतिपन्न वाहात्तां भ्रातृजायां पुलिनेवतार्य्यै" इति ॥ (५) 'यातृ' इति शब्दरूपम् 'या' इति भाषा प्रसिद्धिः ॥

(६) पालिका इति १ वा कुलपालिका इत्यमरः २ ॥

(७) प्रेयांसो प्रेयांसः, सान्तः, अन्येऽकारान्ताः सेक्तासेक्तारौ

दारकर्म[7] परिणयो[8] जामाता[1] दुहितुः पतिः ॥१८२॥
उपपतिस्तु[1] जारः[2] स्यात् भुजङ्गो[1] गणिकापतिः ।
जम्पती[1] दम्पती[2] जायापती[3] भार्य्यापती[4] समाः ॥१८३॥
यौतकं[1] (1)युतयो देयं सुदायो[2] हरणं[3] च तत् ।
कृताभिषेका महिषी[1] भोगिन्यो[1] ऽन्या नृपस्त्रियः ॥१८४॥
सैरन्ध्री[1] या ऽन्यवेश्मस्था स्वतन्त्रा शिल्पजीविनी ।
असिक्नान्तः[1] पुरप्रेष्या दूती[1] सञ्चारिके[2] समे ॥१८५॥
(२)प्राज्ञी[1] प्रज्ञा[2] प्रजानत्यां प्राज्ञा[1] तु प्रज्ञया ऽन्विता ।
स्यादाभीरी[1] महाशूद्री[2] जातिपुंयोगयोः समे ॥१८६॥
पुंयुज्या चार्य्या[1] ऽचार्य्याणी[2] (३) मातुलानी[1] तु मातुली[2] ।
उपाध्याया[1] न्युपाध्यायी[2] क्षत्त्रि[1] यर्य्यी[1] च शूद्र्यपि[1] ॥१८७॥
स्वत आचार्य्या[1] शूद्रा च(४) क्षत्त्रिया[1] क्षत्त्रियाण्यपि[2] ।
(५)उपाध्याय्यु[1] पाध्याया[2] स्यादर्य्या[1] ऽर्य्याणी[2] पुनः समे(६) ॥१८८
(७)दिधिषू[1]स्तु पुनर्भू[2] र्द्विरूढा स्या दिधिषू[1] पतिः(८) ।

---

अपि च, प्रेयस्याद्या दश शब्दाः पुंसि वर्त्तमानाः सन्तः पत्यौ भर्त्तरि वर्त्तन्ते, ते यथा, प्रेयान् १ दयितः २ कान्तः ३ प्राणेशः ४ वल्लभः ५ प्रियः ६ हृदयेशः ७ प्राणसमः ८ प्रेष्ठः ९ प्रणयी १०, प्रणयिनौ प्रणयिनः, नाम्नः॥

(१) युतयो र्वधूवरयोर्देयं परिधानवस्त्राभरणादि १ ॥

(२) पण्डितायाः । प्रजानन्त्याम् ॥  (३) आचार्य्यस्त्रियः ॥

(४) शूद्रादिजातीयानाम् ॥  (५) उपाध्यायो वेदपाठकः ॥

(६) अर्य्यस्य वैश्यस्य स्त्री अर्य्या ॥

(७) दिधिषौ दिधिषू दिधीषुरित्यपि "ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा । सा चाग्रे दिधिषूर्ज्येष्ठा पूर्वा तु दिधिषूर्मता" २ इति मतान्तरम् ॥

(८) दिधिषुः पतिः अग्रे दिधिषुः, इत्यन्यपाठो वृत्तः ॥

स तु द्विजो ऽग्रेदिधिषूर्यस्य स्यात्सै एव गेहिनी ॥१८९।
ज्येष्ठे ऽनूढ़े परिवेत्ता ऽनुजो दारपरिग्रही।
तस्य ज्येष्ठः परिवित्ति जाया तु परिवेदिनी[1(१)] ॥१९०॥
वृषष्यन्ती कामुकी स्या दिच्छायुक्ता तु कामुका।
[(२)]कृतसापत्निका ऽध्यूढ़ा धिविन्नाथ पतिव्रता ॥१९१॥
एकपत्नी सुचरित्रा साध्वी सत्य सती त्वरी।
पुंश्चली[(३)] चर्षणी बन्धक्य विनिता च पांसुला ॥१९२
स्वैरिणी कुलटा [(४)]याति या प्रियं सा ऽभिसारिका।
वयस्या ऽलिः सखी सध्री च्यथिक्नी तु थिग्रुं विना ॥१९
पतिवत्नी जीवत्पति विश्वस्ता विधवा समे।
[(५)]निर्व्वीरा निष्पतिसुता जीवत्तोका तु जीवसूः॥१९४।
मृत्यप्रसूतिका निन्दुः सन्मसु नरमालिनी।
कात्यायनी त्वर्द्धवृद्धा काषायवसना ऽधवा ।१९५॥
श्रवणा भिक्षुकी मुण्डा पोटा तु स्त्री नृलक्षणा।

---

(१) यत्स्मृतिः "येऽग्रजेष्व ऽकलत्रेषु कुर्व्वते दारसंग्रहम्। ज्ञेयाः परिवेत्तारः परिविन्निास्तु पूर्व्वज" इति। दारपरिग्रही परिणी कलत्रः॥

(२) कृतं सापत्न्यं सपत्नी भावोऽस्याः सा। "अध्यूढ़ इव ऽध्यूढ़ा कृतसापत्न्य योषितीति" श्रीधरः। अध्यपरि विन्दत्यस्मा इत्यधिविन्ना "विद्लाभे" तु दादौमुचादिः, विन्दतेः परस्य क्त प्रत्य तकारस्य नित्यं नकारः, नत्र कृहोत्रा भावोऽनुदविन्ने देति सूत्रे विकल्पः। धर्षणी २॥ (३) इत्यपि॥ (४) नवकुलटा नाम्नि॥

(५) "रहिता पति पुत्राभ्यां निर्व्वीरेत्यभिधीयते।" अवीरा इ नरः जीवन्ती जीवसूः। जीवत्पुत्रा इति वा॥

साधारणस्त्री[1] गणिका[2] वेश्या[3] पण्यपणाऽङ्गना[5](1) ॥१९६॥
भुजिष्या[6] लञ्जिका[7] रूपाजीवा[8] वारवधूः पुनः ।
सा वारमुख्या[1]ऽथ चुन्दी[1] कुट्टनी[2] शम्भली[3] समाः ॥१९७॥
पोटा[1] वोटा[2] च चेटी[3] च दासी[4] च कुटहारिका[5] ।
नग्ना[1] तु कोटवी[2] वृद्धा पलिक्न्यथ[1] रजस्वला[1] ॥१९८॥
पुष्पवत्य[2]विरा[3]त्रेयी[4](2) स्त्रीधर्म्मिणी[5] मलिन्य[6]वीः[7] ।
उदक्या[8] ऋतुमती[9] च पुष्पहीना तु निष्कला[1] ॥१९९॥
राका[1] तु सरजाः कन्या स्त्रीधर्म्मः[1] पुष्पं[2] मार्त्तवम् ।
रज[3]स्तत्कालस्तु ऋतुः[1](3) सुरतं[1] मोहनं[2] रतम्[3] ॥२००॥
संवेशनं[4] सम्प्रयोगः[5] सम्भोग[6]श्च रहो[7] रतिः[8] ।
ग्राम्यधर्म्मो[9] निधुवनं[10] कामकेलिः[11] पशुक्रिया[12] ॥२०१॥
व्यवायो[13] मैथुनं[14](4) स्त्रीपुंसौ[1] द्वन्द्वं[2] मिथुनं[3] च तत् ।
अन्तर्वत्नी[1] गुर्विणी[2] स्यात् गर्भवत्यु[3]दरिण्यपि[4] ॥२०२॥
आपन्नसत्त्वा[5] गुर्वी[6] च श्रद्धालु[1] दौर्हृदान्विता ।
विजाता[1] च प्रजाता[2] च जातापत्या[3] प्रसूतिका[4] ॥२०३॥
गर्भ[1]स्तु गरभो[2] भ्रूणो[3] दोहदलक्षणं[4] च सः(5) ॥
गर्भाशयो[1] जरा[2]यूल्वे[3] कललो[1]ल्वे[2] पुनः समे(6) ॥२०३॥

---

(1) पण्याङ्गना । पणाङ्गना इत्येवम् ॥

(2) अविरात्रेयी इति वा पाठः । अवी अव्यौ अव्यः इति रूपम् ॥

(3) रजस् क्ली । ऋतुः पुं ॥ (4) चतुर्दश मैथुन नामानि ॥

(5) दोहदलक्षणं क्ली । जरायुः पुं । उल्वः पुं क्ली ॥

(6) शुक्रशोणित समवायस्य "सप्ताहं कललं विद्यात् ततः सप्ताह बुद्बुदम् । बुद्बुदाज्जायते पेशी पेशीतोऽपि घनं भवेत्" इत्याचाराङ्ग वृत्तिः ॥

(१)दोहदं[१] दौर्हृदं[२] श्रद्धा[३] लालसा[४] सूतिमासि तु ।
वैजननो । विजननं[१] प्रसवो[२] नन्दनः[१] पुत्रः ॥२०५॥
उद्वहो[२]ऽङ्गा[३]-त्मजः[४](२) सूनु[५] स्तनयो[६] दारकः[७] सुतः[८] ।
पुत्रो[९] दुहितरि[१०] स्त्रीत्वे (३)तोका[१]-पत्य[२]-प्रसूतयः[३] ॥२०६॥
(४)तुक्[४] प्रजो[५]भयो र्भ्रात्रीयो[१] भ्रातृव्यो[२] भ्रातु रात्मजे ।
स्वस्रीयो[१] भागिनेय[२]श्च जामेयः[३] कुतप[४]श्च सः ॥२०७॥
नप्ता[१] पौत्रः[२] पुत्रपुत्रो दौहित्रो[१] दुहितुः सुतः ।
प्रतिनप्ता[१] प्रपौत्रः[२] स्यात् तत्पुत्र स्तु परम्परः[१](५) ॥२०८॥
पैतृष्वसेयः[१] स्यात् पैतृष्वस्रीय[२] सुतः पितृष्वसुः ।
मातृष्वस्रीय[१] सुतः मातृष्वसु र्मातृष्वसेय[२] वत् ॥२०९॥
(६)विमातृजो वैमात्रेयो[१] द्वैमातुरो[१] द्विमातृजः ।
सत्या स्तु तनये साम्मातुर[१]-भद्रमातुरः[२] ॥२१०॥
सौभागिनेय[१] कानीनौ[२] सुभगा-कन्ययोः सुतौ ।
(७)पौनर्भव[१] पारस्त्रैणेयौ[२] पुनर्भू-परस्त्रियोः ॥२११॥
दास्या दासेर[१] दासेयौ[२] नाटेर[२] स्तु नटीसुतः ।
बन्धुलो[१] बान्धकिनेयः[२](८) कौलटेरो[३]ऽसतीसुतः ॥२१२॥

---

(१) दोहदं क्ली पुं ॥ (२) अङ्गजः१ आत्मजः २ इत्येवम् ॥

(३) स्वार्थिकेऽत्र सूत पुत्र वृन्दारस्येति विकल्पेन इत्वे, पुत्रिका पक्षे पुत्रका ॥ (४) तु क्ली तुकः ॥

(५) "परम्परः प्रपौत्रादौ मृगभेदे परम्परः । परम्परा परीपाटं सन्तानेऽपि वधे क्वचित् ॥" (६) विरुद्धा माता विमाता तस्यां जातः ॥

(७) "पुनरक्षतयो निर्वाह्यायते वा यथाविधि । सा पुनर्भूः सुतस्तस्याः पौनर्भव उदाहृत" इति स्मृतिः ॥

(८) असती भिक्षुक सत्योः सुतस्य ॥

स तु कौलटिनेयः[१] स्यात् यो भिक्षुकसतीसुतः(१) ।
द्वावप्येतौ कौलटेयौ[१] क्षेत्रजो[१] देवरादिजः(२) ॥२१३॥
स्वजाते त्वौरसौ[१]-रस्यौ[२] मृते भर्त्तरि जारजः ।
गोलको[१] ऽथा मृते कुण्डो[१] भ्राता[१] तु स्यात् सहोदरः[२] ॥२१४
समानोदर्य्य[३]-सोदर्य्य[४]-सगर्भ्य[५]-सहजा[६] अपि ।
सोदर[७] श्च स तु ज्येष्ठः[१] स्यात् पितरः[२] पूर्वजो[३]ऽग्रजः[४] ॥२१५॥
जघन्यजो[१] यविष्ठः[२] स्यात् कनिष्ठो[३] ऽवरजो[४] ऽनुजः[५] ।
स यवीयान्[६] कनीयां[७] श्च पितृव्य[१]-श्याल[२१]-मातुलाः[१](३) ॥२१६
पितुः पत्न्या श्च मातु श्च भ्रातरो देवृ[१] देवरौ[२](४) ।
देवा[३] वा वरजे पत्यु र्जामि[१] स्तु भगिनी[२] स्वसा[३] ॥२१७॥
(५)ननान्दा[१] तु स्वसा पत्यु र्ननन्दा[२] नन्दिनी[२] त्वपि ।
पत्न्या स्तु भगिनी ज्येष्ठा ज्येष्ठश्वश्रूः[१] कुली[२] च सा ॥२१८॥
कनिष्ठा श्यालिका[१] हाली[२] यन्त्रणी[३] केलिकुञ्चिका[४] ।
केलि[१] र्द्रवः[२] परीहासः[३] क्रीडा[४] लीला[५] च नर्म[६] च ॥२१९॥
देवनं[७] कूर्दनं[८] खेला[९] ललनं[१०] वर्करो[११] ऽपि च ।
वप्ता[१] तु जनक[२] स्तातो[३] बीजी[४] जनयिता[५] पिता[६](६) ॥२२०

(१ भिक्षुकी चासौ सती च, भिक्षुक सती "पुंवत्कर्म्म धारये" इति पुंवद्भावः । (२) क्षेत्रे कलत्रे जातः क्षेत्रजः, तल्पज श्चापीति केचित् ॥

(३) इति "काका" एकं नाम पितृव्ये "शाला" नाम एकं श्यालके "मामा" नाम एकं मातुले ॥

(४) देवा देवरौ देवरः, देवरः देवरौ देवराः, देवा देवानौ देवानः ।

(५) ननान्दा ननान्दरौ ननान्दरः । यन्त्रिणी इति पाठौ वा, यत्नणं स्त्री कनिष्ठायाम् ॥

(६) बीजिनौ बीजिनः, "स्त्री क्षेत्रमोषधीपालं बीजो चाम-

पितामह[1] स्तस्य पिता तत्पिता प्रपितामहः[1]।
मातुर्मातामहा[1]-द्येवं माता[1]ऽम्बा[2] जननी[3] प्रसूः[4] ॥२२१॥
सवित्री[5] जनयित्री[6] च जमिला[1] तु बहुप्रसूः।
धात्री[1] तु स्या दुपमाता[2] वीरमाता तु वीरसूः ॥२२२॥
श्वश्रू[1] र्माता पति पत्न्योः श्वशुर स्तु तयोः पिता।
पितर[1] स्तु पितु र्वंश्या मातु र्मातामहाः[1] कुले ॥२२३॥
पितरौ[1] मातापितरौ[2] मातरपितरौ[3] पिता च माता च।
श्वश्रूश्वशुरौ[1] श्वशुरौ[2] पुत्रौ[1] पुत्र श्च दुहिता च ॥२२४॥
भ्राता च भगिनी चापि भ्रातरा[1] वथ बान्धवः[1]।
स्वो[2] ज्ञातिः[3] स्वजनो[4] बन्धुः[5] सगोत्र[6]श्च निजः[1]पुनः ॥२२५॥
आत्मीयः[2] स्वः[3] स्वकीय[4]श्च सपिण्डा[1] स्तु सनाभयः[2]।
तृतीयाप्रकृतिः[1] षण्डः[1] षण्ढ[2] क्लीबो[4] नपुंसकम्[5](1) ॥२२६॥

इन्द्रियायतन[1] मङ्ग[2]-विग्रहौ[3],
क्षेत्र[4]-गात्र[5]-तनु[6]भूघना[7]-स्तनूः[8]।
मूर्त्तिमत्[9]-करण[10]-काय[11]-मूर्त्तय[12]
वेर[13]-संहनन[14]-देह[15]-सञ्चराः[16](2) ॥२२७॥

घनो[17] बन्धः[18] पुरं[19] पिण्डो[20] वपुः[21] पुद्गल[22]-वर्ष्मणी।
कलेवरं[4] शरीरो[25]ऽस्मिन्न जीवे कुणपः[1] शवः[2](3) ॥२२८॥

---

स्ततायनम्। तत्रयमा नरः स्वामी जन्तु सत्त्व निमिष्यते" इति मत्स्य-पुराणम्॥

(१) नपुंसकमिति क्ली॥

(२) तनुः स्त्री, तनूः स्त्री, वेरः पुं क्ली, देहः पुं क्ली॥

(३) पिण्डः पुं क्ली, वपुस् क्ली, वर्ष्मन् क्ली शरीरः पुं क्ली, शवश्च इति

(१) स तु भाले भ्रमरकः[1] कुरलो[2] भ्रमरालकः[3] ॥२३३॥
(२) धम्मिल्लः[1] संयताः केशाः केशवेशे कवर्यथ ।
(३) वेणिः[1] प्रवेणी[2] शीर्षण्य[1]-शिरस्यौ[2] विशदे कचे ॥२३४॥
केशेषु वर्त्म सीमन्तः[1] पलितं[1] (४) पाण्डुरः कचः ।
चूडा[1] केशी[2] केशपाशी[3] शिखा[4] शिखण्डिकाः[5] समाः ॥२३५॥
सा बालानां काकपक्षः[1] शिखण्डक[2]-शिखाण्डकौ[3] ।
तुण्ड[1]मास्यं[2] मुखं[3] (५) वक्त्रं[4] लपनं[5] वदना[6]-नने[7] ॥२३६॥
भाले[1] गोध्य[2]-लिका[3]-ऽलीक[4]-ललाटानि[5] श्रुतौ[1] श्रवः[2]।
शब्दाधिष्ठान[3]-पैञ्जूष[4]-महानाद[5]-ध्वनिग्रहाः[6] ॥२३७॥
कर्णः[7] श्रोत्रं[8] श्रवणं[9] च वेष्टनं[1] कर्णशष्कुली[2] ।
पालिस्तु[1] कर्णलतिका[2] शङ्खो[1] भालश्रवोऽन्तरे ॥२३८॥
चक्षु[1] रक्षी[2]-क्षणं[3] नेत्रं[4] नयनं[5] दृष्टि[6] रम्बकम्[7] ।
लोचनं[8] दर्शनं[9] दृक्[1] च तत्तारा[1] तु कनीनिका[2](६) ॥२३९॥
वामं तु नयनं सौम्यं भानवीयं तु दक्षिणम् ।

---

(१) चत्वारि वक्रीकृत केशनामानि। भालाभिमुखे चेत् तत्र त्रीणि नामानि ॥

(२) "तद्बन्धविशेषाः स्युर्वेणी धम्मिल्लकुन्तलकबर्यः" इति हलायुधः। रेफयुक्त पाठोऽपि क्वचित् ॥ (३) वेणिः दीर्घान्तोऽपि ॥

(४) पलित पुं क्ली। (५) क्ली मुखं पुं क्ली ॥

(६) "तारकापि, तारकावर्णकेति द्वन्द्वस्याभावः, "तारको दैत्यभित्कर्णधारयोर्दृक्तारकम्। अक्ष्णः कनीनिकायां च तारकापि चेति" "तारकाक्ष्णः कनीनिके" इत्यमरः। "तारकेति कनकस्य तत्त्वं ज्योतिषि-तीत्वाभावः" इति क्षीरस्वामी ॥

(१)असौम्येऽक्षिण्यनक्षि¹ स्यादीक्षणं¹ तु निशामनम्² ॥२४०॥

निभालनं³ निशमनं⁴ निध्यानं⁵ अवलोकनम्⁶ ।

दर्शनं⁷ द्योतनं⁸ निर्वर्णनं⁹ चापाङ्गवीक्षणम्¹ ॥२४१॥

अपाङ्गदर्शनं² काक्षः³ कटाक्षो⁴ ऽक्षिविकूणितम्⁵ ।

स्या दुन्मीलन¹ मुन्मेषो² निमेष¹ स्तु निमीलनम् ॥२४२॥

अक्ष्णो र्बाह्यान्तावपाङ्गौ¹(२) भ्रूरूर्ध्वे रोमपद्धतिः ।

सकोपभ्रूविकारे स्यात् भ्र-भ्रु-भ्रू-भ्रू-परा कुटिः(३) ॥२४३॥

कूर्च¹ कूर्पं² भ्रुवो र्मध्ये (४)पक्ष्म¹ स्यान्नेत्ररोमणि ।

गन्धज्ञा¹ नासिका² नासा³ घ्राणं⁴ घोणा⁵ विकूणिका⁶ ॥२४४॥

(५)नक्रं⁷ नर्कुटकं⁸ शिङ्घिन्यो⁹ ष्ठो¹ ऽधरो² रदच्छदः³ ।

दन्तवस्त्रं⁴ च तत्प्रान्तौ (६)सृक्कणी¹ असिकं¹ त्वधः ॥२४५॥

असिकाध स्तु चिबुकं¹ स्यात् गल्लः¹ सृक्कणः परः ।

गल्ला त्परः कपोल¹ स्च परो गण्डः¹ कपोलतः ॥२४६॥

---

(१) विकारयुक्ते चक्षुषि एकम् अनक्षि अनक्षिणी अनक्षीणि ॥

(२) भ्रूः स्त्री, भ्रूः भ्रुवौ भ्रुवः ॥

(३) भ्रकुटिः १ भ्रुकुटिः २ भ्रूकुटिः ३ भ्रकुटिः ४ मतान्तरार्थ-येण स्त्रीलिङ्गाः ॥

(४) पुं क्ली, पक्ष्मा पक्ष्माणौ पक्ष्माणः, पक्ष्म पक्ष्मणी पक्ष्माणि ॥

(५) बृहस्पतिस्तु "नक्रोनास्या विकूणिकेति" इत्याह ॥

(६) औणादिक क्विप् प्रत्ययान्तः सृक्कः, सृक्कणीति क्लीब द्विवच नान्तम् । सृक्क सृक्कणी सृक्काणि । सृक्कि इत्यपि । [illegible] सृक्कणी सृक्कमरः । ओस्येति आतावेकत्वम् । सृजति [illegible] सृक्कि [illegible] सृक्कणी अत्रापि कश्चित् कानन्तत्वादिति क्षीरस्वामी । सृक्कि सृक्किणी सृक्कीणि ॥

कूर्चं¹ शिरश्चौ पार्श्वं स्निग्धास्थः¹ कूर्चशिरः² समे ॥२८१॥
तलहृदयं¹ तु तलं² मध्ये पादतलस्य तत् ।
तिलकः¹ कालकः² पिप्लु³ र्जटुल⁴ स्तिलकालकः⁵⁽¹⁾॥२८२॥
⁽²⁾रसा¹-सृङ्²-मांस³-मेदो⁴ऽस्थि⁵-मज्ज⁶-शुक्राणि⁷ धातवः ।
सप्तैव दश वैकेषां रोम⁸-त्वक्⁹-स्नायुभिः¹⁰ सह ॥२८३॥
रस¹ आहारतेजो²ऽग्निसम्भवः³ षड्रसासवः⁴ ।
आग्नेयो⁵ऽस्रकरो⁶ धातु⁷ र्घन-मूल-महा-परः⁽³⁾॥२८४॥
रक्तं¹ रुधिर² माग्नेयं³ विस्रं⁴ तेजो⁵-भवे⁶ रसात्⁽⁴⁾ ।
शोणितं⁷ लोहित⁸ मसृग्⁹⁽⁵⁾ वाशिष्टं¹⁰ प्राणदा¹¹सुरे¹²॥२८५॥
क्षतजो¹³ मांसकार्य¹⁴स्रं¹⁵ मांसं¹ पलल² जङ्गले³ ।
रक्त तेजो⁴-⁽⁶⁾भवे⁵ क्रव्यं⁶ काश्यपं⁷ तरसा⁸-मिषे⁹॥२८६॥
मेदस्कृत्¹⁰⁽⁷⁾ पिशितं¹¹ कीनं¹² पलं¹³ पेश्य¹स्तु⁽⁸⁾ तत्कृताः ।

---

(१) जतु न इति पाठोऽपि । तिलकालोऽपि ॥

(२) धातुनामैकैकम् ॥

(३) घनधातुः २ मूलधातुः २ महाधातुरिति ॥

(४) रसतेजसी रसतेजांसि, रसतेजः १ रसभवम् २ ॥

(५) असृक् असृग् असृजी असृञ्जि, शसादौ दन्पादनासिके-त्यादिना विकल्पेन असन् इत्यादेशे असानि असृञ्जि, असृजा अस्ना, असृग्भ्याम् असभ्याम्, असृग्भिः असभिः, असृजे अस्ने, असृजः अस्नः २, असृजोः अस्नोः २, असृजाम् अस्नाम्, असृजि अस्नि असनि, असृक्षु असःसु इति वा पाठः ॥

(६) रक्ततेजसी रक्ततेजांसि, रक्ततेजः १ रक्तभवम् २ ॥

(७) मेदस्कृती मेदस्कृती ॥

(८) पेशीशब्दान्तोऽपि पेशिः पेशी ॥

उत्सवेषु सुहृद्भिर्यद्बलादाकृष्य गृह्यते ।
वस्त्रमाल्यादि तत् पूर्णपात्रं[1] पूर्णानकं[2] च तत् ॥३४१॥
तत् स्यादाप्रपदीनं[1] तु व्याप्नोत्याप्रपदं हि यत् ।
(1)चीवरं[1] भिक्षुसङ्घाटी[2] जीर्णवस्त्रं पटच्चरम्[1] ॥३४२॥
शाणी[1] गोणी[2] छिद्रवस्त्रे जलार्द्रा[1] क्लिन्नवाससि ।
पर्य्यस्तिका[1] परिकरः[2] पर्य्यङ्कश्[3]चावसक्थिका[4] ॥३४३॥
(2)कुथो[1] वर्णः[2] परिस्तोमः[3] प्रवेणी[4]-नवता[5]-ऽऽस्तराः[6] ।
अपटी[1] काण्डपटः[2] स्यात् प्रतिसीरा[3] जवन्यपि[4](3) ॥३४४॥
तिरस्करिण्य[5]थो उल्लोचो[1] वितानं[2] कदको[3]ऽपि च ।
चन्द्रोदये[4](4) स्थूलं[1] दूष्ये[2] केणिका पटकु[2]ट्यपि ॥३४५॥
गुणालयनिकायां[2] स्यात् संस्तर[1]-स्रस्तरौ[2] समौ(5) ।
तल्पं[1] शय्या[2] शयनीयं[3] शयनं[4] तलिमं[5](6) च तत् ॥३४६॥
मञ्च[1]-मञ्चक[2]-पर्य्यङ्क[3]-पल्यङ्काः[4] खट्वया[5] समाः ।
उच्छीर्षक[1] मुपधान[2]-बर्हौ[3] पाली[1] पतद्ग्रहः[2] ॥३४७॥
प्रतिग्राहो[3](7) मुकुरा[1]-त्मदर्शा[2]-दर्शा[3]स्तु दर्पणः[4] ।

---

(1) [illegible] मुनिजनाच्छादनस्य ॥

(2) सामान्येन गजाद्युपरि सभाभूमौ वा आस्तरणस्य "झुल-कालिम्" इति भाषा ॥

(3) यवनिकाऽपि । पश्चात् प्रच्छादनपटे "परदा" इति यस्य प्रसिद्धिः ॥

(4) वस्त्रगृहस्य ॥

(5) मल्लवादिरचितशय्या ॥

(6) तलिमम् इति वा ॥

(7) मकुरोऽपि ॥

स्याद्वेत्रासनम् आसन्दी[2](१) विष्टरः[1] पीठ[2]मासनम्[3] ॥३४८॥
कशिपु[1] र्भोजनाच्छादौ बीबीरं[1] शयनासने ॥
लाक्षा[1] द्रुमामयो[2] राक्षा[3] रङ्गमाता[4] पलङ्कषा[5] ॥३४९॥
जतु[6] र्जतुका[7] क्रिमिजा[8] यावा[1]लक्तौ[2] तु तद्रसः ।
अञ्जनं[1] कज्जलं[2] दीपः[1] प्रदीपः[2] कज्जलध्वजः[3] ॥३५०॥
स्नेहप्रियो[4] गृहमणि[5] र्दशाकर्षो[6] दशेन्धनः[7] ।
व्यजनं[1] तालवृन्तं[2] तत् पवित्रं[1] मृगचर्मणः ॥३५१॥
आलावर्त्तं[1] तु वस्त्रस्य कङ्कतिः[1] केशमार्जनः[2] ।
प्रसाधन[3] स्त्वथ बालक्रीडनके[1] गुडो[2] गिरिः[3] ॥३५२॥
गिरियको[4] गिरिगुडः[5] समौ कन्दुक[1]-गेन्दुकौ[2] ।
राजा[1] राट्[2] पृथिवीशक्र[3]-मध्यलोकेश[4]-भूभृतः[5] ॥३५३॥
महीक्षित्[6] पार्थिवो[7] मूर्द्धाभिषिक्तो[8] भूप्रजा-नृपः[9](२) ।
(३)मध्यमो[1] मण्डलाधीशः[2] सम्राट्[1] तु शास्ति यो नृपान् ॥३५४॥
(४)यः सर्वमण्डलस्येशो राजसूयं(५) च योऽयजत् ।
चक्रवर्ती[1] सार्वभौम[2] स्ते तु (६)द्वादश भारते ॥३५५॥
आर्षभि[1] र्भरत[2] स्तत्र सगर[1] स्तु सुमित्रभूः[2] ।

---

(१) आसन्दी स्त्री पुंलिङ्गः इति हलायुधटीका "कल्पत" इत्यपि ॥

(२) भूपः, प्रजापः, नृपः यौगिकत्वात् भूपालः, लोकपालः नरपाल इत्यादयः ॥

(३) अपेतमण्डलापेक्षया सामान्यः ॥

(४) द्वादश राजचक्रस्य ॥

(५) राजसूयं क्रतुविशेषम् ॥

(६) [illegible] आर्षभ्याद्या ब्रह्मदत्तपर्यन्ता द्वादश ॥

(१)मघवा[1] वैजयिः[2] राजा[1] अश्वसेननृपनन्दनः[2] ॥३५६॥

सनत्कुमारो[2]ऽथ(२) शान्तिः[1] कुन्थु[1] अरो[1] जिना अपि।

सुभूमस्तु[1] कार्तवीर्यः[2] पद्मः[1] पद्मोत्तरात्मजः[2] ॥३५७॥

हरिषेणो[1] हरिसुतो[2] जयो[1] विजयनन्दनः[2]।

ब्रह्मसूनु[2] र्ब्रह्मदत्तः[2] सर्वेऽपीक्ष्वाकुवंशजाः ॥३५८॥

प्राजापत्य[1] स्त्रिपृष्ठो[2]ऽथ(३)द्विपृष्ठो[1] ब्रह्मनन्दनः[2]।

स्वयम्भू[1] रुद्रतनयः[2] सोमभूः[1] पुरुषोत्तमः ॥३५९॥

शैवः[1] पुरुषसिंहो[2]ऽथ महाशिरःसमुद्भवः[1]।

स्यात् पुरुषपुण्डरीको[2] दत्तो[1]ऽग्निसिंहनन्दनः[2] ॥३६०॥

(४)नारायणो[1] दाशरथिः[2] कृष्ण[1]स्तु वसुदेवभूः[2]।

वासुदेवा[1] अमी(५) कृष्णा नव शुक्ला बला[1]स्त्वमी(६)॥३६१॥

(७)अचलो[1] विजयो[2] भद्रः[3] सुप्रभ[4]श्च सुदर्शनः[5]।

---

(१) मघवानौ मघवानः ॥

(२) जिन चक्रवर्त्ति नामैकम् ॥

(३) तयोर्वंश्याः षष्ठे पश्चिमप्रदेशेऽस्य त्रिपृष्ठः त्रिपृष्ठाद्यस्य चक्रवर्त्तिनः द्वौ वंश्यौ षष्ठे पश्चिमप्रदेशेऽस्य द्विपृष्ठः प्राजापत्यादिः ॥

(४) अन्यत्र वासुदेवे सर्वे नीलावलाश्च शुक्लवर्णेति एतेषां च वासुदेव बलदेवानाम् अष्टानां गौतमगोत्रं नारायणपद्मयोस्तु काश्यपगोत्रं ... बलदेव वासुदेवा अर्द्धभरतभुञ्जि गौतमःसमुक्ता-नारायणपद्मौ ... ॥

(५) अमीपूर्वोक्ताः प्रजापत्याद्याः कृष्णाश्च वासुदेवा उच्यन्ते कृष्णावर्णेन श्यामाः ॥

(६) अमी वक्ष्यमाणाः नवैत्यमापि ... शुक्लवर्णाः एकाः कर्णेन धवलाः ॥ (७) एकैकम् ॥

आनन्दो नन्दनः पद्मो रामो विष्णुद्विषस्त्वमी(१) ॥३६२॥
(२)अश्वग्रीवस्तारकश्च मेरको मधुरेव च ।
निशुम्भ-बलि-प्रह्लाद-लङ्केश-मगधेश्वराः ॥३६३॥
(३)जिनैः सह त्रिषष्टिः स्युः शलाकापुरुषा अमी ।
आदिराजः पृथुर्वैन्यो मान्धाता(४) युवनाश्वजः ॥३६४॥
धुन्धुमारः कुवलाश्वो हरिश्चन्द्रस्त्रिशङ्कुजः ।
(५)पुरूरवा बौध ऐल उर्वशीरमणश्च सः ॥३६५॥
दौष्यन्तिर्भरतः सर्वदमनः शकुन्तलात्मजः ।
हैहयस्तु कार्तवीर्यो दोःसहस्रभृदर्जुनः ॥३६६॥
कौशल्यानन्दनो दाशरथी रामोऽस्य तु प्रिया ।
वैदेही मैथिली सीता जानकी धरणीसुता ॥३६७॥

---

(१) अमी वक्ष्यमाणा अश्वग्रीवादयो नव विष्णूनां त्रिपृष्ठादीनां वासुदेवानां यथाक्रमं द्विषः प्रतिपक्षाः ॥

(२) एकैकम् ॥

(३) उपसंहारमाह जिनैरिति जिनैर्ऋषभादिभिश्चतुर्विंशत्या सह मीलिता अमी भरतादयो द्वादश चक्रवर्तिनः-त्रिपृष्ठादयो नव वासुदेवाः-अचलादयो नव बलदेवाः-अश्वग्रीवाद्या नव प्रतिवासुदेवाश्चेति सर्वे मिलिता त्रिषष्टिः स्युः। ते च शलाका पुरुषाः पुरुषेषु जातिविशेषा इत्यर्थः ॥

(४) मान्धातारौ मान्धातारः, एते मान्धातृप्रमुखाः षडपि चक्रवर्तित्वेन प्रसिद्धाः । यदाह "मान्धाता १ धुन्धुमारश्च २ हरिश्चन्द्रः ३ पुरूरवाः ४ भरतः ५ कार्तवीर्यश्च ६ षडेते चक्रवर्तिनः ॥"

(५) पुरूरवाः पुरूरवसौ पुरूरवसः ॥

बृहन्नटो[२(१)] गुडाकेशः[३] सुभद्रेशः[४] कपिध्वजः[५] ॥३७३॥
बीभत्सुः[६] कर्णजित्[७] तस्य गाण्डीवं[१] गाण्डिवं[२] धनुः ।
पाञ्चाली[१] द्रौपदी[२] कृष्णा[३] सैरन्ध्री[४] नित्ययौवना[५] ॥३७४॥
वेदिजा[६] याज्ञसेनी[७] च कर्णः[१] चम्पाधिपो[२]ऽङ्गराट्[३] ।
राधा[४]-सूता-र्क[५]-तनयः[६(२)] कालपृष्ठं[१] तु तद्धनुः ॥३७५॥
(३)श्रेणिकः[१] तु भम्भासारो[२] हालः[१] स्यात् सातवाहनः[२(४)] ।
कुमारपालः[१] चौलुक्यो[२] राजर्षिः[३] परमार्हतः ॥३७६॥
मृतस्वमोक्ता[५] धर्मात्मा[६] मारिव्यसनवारकः[७] ।
राजबीजी[१(५)] राजवंश्यो[२] बीज्य[१]-वंश्यौ[२] तु वंशजे ॥३७७॥
स्वाम्य[१] मात्यः[२] सुहृत्[३] कोशो[४] राष्ट्र[५]-दुर्ग[६]-बलानि[७] च ।
(६)राज्याङ्गानि प्रकृतयः[१(७)] पौराणां श्रेणयोऽपि च ॥३७८॥
तन्त्रं[१] स्वराष्ट्रचिन्ता स्यादावापः[१] त्वरिचिन्तनम् ।

---

(१) बृहत्यो नटश्चेति बृहन्नटः, विराटगृहे छद्मना नाट्याचार्योऽयमभूदिति प्रसिद्धिः ॥

(२) राधातनयः सूततनयः अर्कतनयः ॥

(३) राजविशेषाणाम् ॥

(४) कुन्तलराजविशेषे हालः शकादित्यश्च, सातं दत्तं सुतं वाहनमस्य सातवाहनः सालवाहन इत्यपि ॥

(५) राजबीजिनो राजबीजिनः ॥

(६) स्वामी प्रभुः, अमात्यो मन्त्री, सुहृत् मित्रम् । कोशो भाण्डागारः, राष्ट्रं जनपदः, दुर्गं कोट्टः (कोटगढ इत्यादि भाषा) बलं सैन्यम् । राज्याङ्गत्वादेकैकं ज्ञेयम् ॥

(७) "अमात्याद्याः पौराश्च श्रेण्यः प्रकृतयः स्मृताः" इति माधवः ॥

परिस्कन्दः[1] परिकरः[2] परिवारः[3] परिग्रहः[4] ॥३७९॥
परिच्छदः[5] परिबर्ह[6]स्तन्त्रो[7]-पकरणे[8] अपि ।
राजशय्या[1] महाशय्या[2] भद्रासनं[1] नृपासनम्[2] ॥३८०॥
सिंहासनं[1] तु तत् हैमं(1) छत्रं[1] त्वातपवारणम्[2] ।
चामरं[1] बालव्यजनं[2] रोमगुच्छः[3] प्रकीर्णकम्[4] ॥३८१॥
स्थगी[1] ताम्बूलकरङ्को[2] भृङ्गारः[1] कनकालुका[2] ।
भद्रकुम्भः[1] पूर्णकुम्भः[2] पादपीठं[1] पदासनम्[2] ॥३८२॥
अमात्यः[1] सचिवो[2] मन्त्री[3] धीसखः[4] सामवायिकः[5] ।
नियोगी[1] कर्मसचिव[2] आयुक्तो[3] व्यापृत[4]श्च सः ॥३८३॥
द्रष्टा तु व्यवहाराणां प्राड्विवाको[1] ऽक्षदर्शकः[2] ।
महामात्राः[1] प्रधानानि[2](2) पुरोधा[1]स्तु पुरोहितः[2] ॥३८४॥
सौवस्तिको[3] ऽथ द्वारस्थ[1] क्षत्ता[2] स्यात् द्वारपालकः[3] ।
दौवारिक[4] प्रतीहारो[5] वेत्रि[6]-त्सारक[7]-दण्डिनः[8] ॥३८५॥
(3)रक्षिवर्गे ऽनीकस्थः[1] स्यादध्यक्षा[1]-धिकृतौ[2] समौ ।
पौरोगवः[1] सूदाध्यक्षः[2] सूद[1]स्त्वौदनिको[2] गुणः[3] ॥३८६॥
भक्तकारः[4] सूपकारः[5] सूपा[6]-रालिक[7]-वल्लवाः[8] ।
भौरिकः[1] कनकाध्यक्षो[2] रूप्याध्यक्ष[1]स्तु नैष्किकः[2] ॥३८७॥
स्थानाध्यक्षः[1] स्थानिकः[2] स्यात् शुल्काध्यक्ष[1]स्तु शौल्किकः[2]।

---

(1) हैमो विकारो हैमम् ॥

(2) प्रधानमप्यत्र कोषविदः "महामात्राः प्रधानं स्यादिति" इत्याहुः ॥

(3) बहुत्वमत्र राजसेवाविवक्षया वा ॥

(१)शुल्क[१]स्तु घट्टादिदेयं धर्माध्यक्ष[१]स्तु धार्मिकः[२] ॥१८८॥
धर्माधिकरणी[३] चाथ हट्टाध्यक्षो[१] ऽधिकर्मिकः[२] ।
चतुरङ्गबलाध्यक्षः[१] सेनानी[२] र्दण्डनायकः[३] ॥१८९॥
स्यायुक्तो[१] ऽधिकृतो ग्रामे गोपो[१] ग्रामेषु भूरिषु ।
स्याता मन्तःपुराध्यक्षे ऽन्तर्वंशिका[१]-वरोधिकौ[२] ॥१९०॥
शुद्धान्तः[१] स्या दन्तःपुर[२] मवरोधो[३] ऽवरोधनम्[४](२) ।
सौविदल्लाः[१] कञ्चुकिनः[२] स्थापत्याः[३] सौविदा[४]श्च ते ॥१९१॥
षण्ढो[१] वर्षवरः[२] शत्रौ[१] प्रतिपक्षः[२] परो[३] रिपुः[४] ।
शात्रवः[५] प्रत्यवस्थाता[६] प्रत्यनीको[७] ऽभिया[८]त्यऽरी[९] ॥१९२॥

दस्युः[१०] सपत्नो[११] ऽसहनो[१२] विपक्षो[१३]
द्वेषी[१४] द्विषन्[१५](३) वैर्य्य[१६] हितो[१७] जिघांसुः[१८]।
दुर्हृत्[१९] परेः पन्थक[२०](४)-पन्थिनौ[२१] द्विट्[२२]
प्रत्यर्थ्य[२३] मित्रा[२४] वभिमात्य[२५]-रातो[२६] ॥१९३॥

वैरं[१] विरोधो[२] विद्वेषो[३] वयस्यः[१] सवयाः[२](५) सुहृत्[३] ।

---

(१) "स्वं विचिन्त्य धनुर्द्धरानमं पीडितो दुहितृशुल्कसंस्थया" इति रघुः । शुल्कशब्दो विवाहाय वरादुपात्ते वस्तुवाच्यपि यदाह अजयः "शुल्को घट्टे विवाहाय वरादुपात्ते च वस्तुनि" महेश्वरोपि "शुल्कं घट्टादिदेये स्याज्जामातृबन्धकेपि च" बन्धको विवाहाय यदुपात्तं धनमिति तट्टीका । "घट्टादिदेयं शुल्कोऽस्त्री" इत्यमरोपि ॥

(२) अन्तर्महलिकस्य, हिन्दिभाषायां "महल" इति ख्यातस्य ॥

(३) द्विषन्तौ द्विषन्तः ॥

(४) परिपन्थिनौ परिपन्थिनः, परिपन्थिकः १ परिपन्थी २ । [illegible] ॥

(५) सवयसौ सवयसः, सुहृदौ सुहृदः ॥

स्निग्धः[4] सहचरो[5] मित्रं[1] सखा[3] सख्यं[1] तु सौहृदम्[2]॥३९४॥
सौहार्दं[2] साप्तपदीन[3]-मैत्र[5](1) अजर्याणि[6] सङ्गतम्[7]।
आनन्दनं[1] त्वा प्रच्छन्नं[2] स्यात् सभाजन[3]मित्यपि॥३९५॥
विषयानन्तरो राजा शत्रु[1] र्मित्र[1] मतःपरम्।
उदासीनः[1] परतरः पार्ष्णिग्राहः[1] स्तु पृष्ठतः॥३९६॥
अनुवृत्ति[1] स्त्व नुरोधो[2] हेरिको[1] गूढपुरुषः[2]।
प्रणिधि[3] र्यथार्हवर्णो[4]ऽवसर्पो[5] मन्त्रविच्चरः[7]॥३९७॥
वार्त्तायनः[8] स्पश[9] श्चार[10] आप्त[1]-प्रत्ययितौ[2] समौ।
सत्त्रिणि[1](2) स्याद् गृहपति[2] र्दूतः[1] सन्देशहारकः॥३९८॥
(3)सन्धि[1]-विग्रह[2]-यानान्या[3] सन[4] द्वैधा[5]-श्रया[6] अपि।
षड्गुणाः[1] शक्तय[1] स्तिस्रः प्रभुत्वो[1]-त्साह[2]-मन्त्र[3]-जाः(4)॥३९९॥
(5)साम[1]-दान[2]-भेद[3]-दण्डा[4] उपायाः[1] साम[1](6) सान्त्वनम्।
उपजापः[2][1] पुन र्भेदो[2] दण्डः[1] स्यात् साहसं[2] दमः[3]॥४००॥
प्राभृतं[1] ढौकनं[2] लञ्चो[3] त्कोचः[4] कौशलिका[5]-मिषे[6]।

---

(१) मैत्री नदीवत्, मैत्रमित्यपि कोषे॥

(२) सत्त्री सत्त्रिणौ सत्त्रिणः॥

(३) षड्गुणानमेकैकम्॥

(४) प्रभुत्वोत्साह मन्त्रभवा इत्यर्थः, एभि स्त्रिभिः तत्र कोशः भाण्डागारः दुर्गः कोट्टः दण्डसम्पत्तिः सैन्यम् प्रभुशक्तिः १ उद्यम्य सहनं उत्साहशक्तिः २ पराक्रमसम्पत् इत्यर्थः मन्त्रः पञ्चाङ्गो मन्त्रशक्तिः विज्ञानसम्पत् इत्यर्थः ३ एषां त्रयाणां शक्तिरिति नामेत्यर्थः॥

(५) एकैकमुपायानाम्॥

(६) सामनी सामानि॥

विविक्त[३]-विजनं[४]-कान्त[५]-निःशलाकानि[७] केवलम्[८]।
युक्तं[१] रहस्यं[२] न्यायस्तु[१] देशरूपं[२] समञ्जसम्[३] ॥४०६॥
कल्प[४]-अभ्रेषौ[५] नयौ[६] न्याय्यं[१] तु चितं[२] युक्तं[३]-साम्प्रते[४]।
लभ्यं[५] प्राप्तं[६] भजमानम्[७]-अभिनीतौ[८]-पयिकानि[९] च ॥४०७॥
प्रक्रिया[१] त्वधिकारो[२]ऽथ मर्यादा[१] धारणा[२] स्थितिः[३]।
संस्था[४]ऽपराधस्तु[१] मन्तु[२]र्व्यलीकं[३] विप्रिया[४]-गसी[५] ॥४०८॥
बलिः[१] करो[२] भागधेयो[३] द्विपाद्यो[१] द्विगुणो दमः।
वाहिनी[१] पृतना[२] सेना[३] बलं[४] सैन्य[५]मनीकिनी[६] ॥४०९॥
कटकं[७] ध्वजिनी[८] तन्त्रं[९] दण्डो[१०]ऽनीकं[११] पताकिनी[१२]।
वरूथिनी[१३] चमू[१४]श्चक्रं[१५] स्कन्धावारो[१६]ऽस्य तु स्थितिः ॥४१०॥
शिविरं[१] रचना तु स्यात् व्यूहो[१] दण्डादिको युधि(१)।
प्रत्यासारो[१] व्यूहपार्ष्णिः[१] सैन्यपृष्ठे प्रतिग्रहः[२](२) ॥४११॥
एकेभैकरथाः त्र्यश्वा पत्तिः[१] पञ्चपदातिका।
सेना[२] सेनामुखं[३] गुल्मो[४] वाहिनी[५] पृतना[६] चमूः[७] ॥४१२॥
अनीकिनी[८] च पत्तेः स्यादिभाद्यैस्त्रिगुणैः क्रमात्(३)।

---

(१) युधि संग्रामनिमित्तं सैन्यानां रचना (विन्यासविशेषः) व्यूहः।

(२) प्रत्यासरतीति प्रत्यासारः सैन्यरचनायाः पश्चाद्भाग इत्यर्थः।

(३) महाभारतम्। "एको रथो गजश्चैको नराः पञ्चपदातयः। त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते"॥ पत्तेः सर्वैस्त्रिभिस्त्रिभिरिभरथाश्वपदा-तिभिः क्रमेण त्रिगुणितैः सेनादीनि नामानि क्रमेण भवन्ति। तेन पत्तिस्त्रिगुणा सेना १ सेना त्रिगुणा सेनामुखं २ सेनामुखं त्रिगुणं गुल्मः ३ गुल्मस्त्रिगुणो वाहिनी ४ वाहिनी त्रिगुणा पृतना ५ पृतना त्रिगुणा

युगन्धरं[1] कूबरः[2] स्यात् (1)युगं[1] ईषान्तबन्धनम् ॥४२०॥
युगकीलकस्[1] तु शम्याः[2] प्रासङ्गस्[1] तु युगान्तरम्।
अनुकर्षो[1] दार्वधःस्थं धूर्यानमुखं[1] च धूः[2] ॥४२१॥
(2)रथगुप्तिस्[1] तु वरूथो[2] रथाङ्गानि त्वपस्कराः[1]।
शिबिका[1] याप्ययाने[2]ऽथ दोला[1] प्रेङ्खा[2]-दिका भवेत् ॥४॥
वैनीतकं[1] परम्परावाहनं शिबिकादिकम्।
यानं[1] युग्यं[2] पत्रं[3] वाह्यं[4] वह्यं[5] वाहन[6]-धोरणे[7] ॥४२३॥
नियन्ता[1] प्राजिता[2] यन्ता[3] सूत[4] सव्येष्ठृ[5]-सारथी[6]।
दक्षिणस्थ[7]-प्रवेतारौ[8](3) क्षत्ता[9] रथकुटुम्बिकः[10] ॥४२४॥
रथारोहिणि[1] तु रथी[1](4) रथिको[1] रथिरो[2] रथी[3]।
(5)अश्वारोहे[1] त्वश्ववारः[2] सादी[3] च तुरगी[4] च सः(6) ॥४२५॥
हस्त्यारोहे[1] सादि[2]-यन्तृ[3]-(7)महामात्र[4]-निषादिनः[5]।
आधोरणा[1] हस्तिपका[2] गजाजीवे[3] भपालकाः[4] ॥४२६॥
योद्धारस्[1] तु भटा[2] योधाः[3] सेनारक्षास्[1] तु सैनिकाः[2]।
सेनायां ये समवेतास्ते सैन्याः[1] सैनिका[2] अपि ॥४२७॥

---

(1) पुं क्ली, युगः पुंसीत्यमरः ॥

(2) रथसन्नाहस्य ॥

(3) प्रवेतारौ इति वा पाठः ॥

(4) रथिनौ रथिनः ॥

(5) रथवत् त्रीणि नामानि ॥

(6) सादी इत्यन्तः सादी सादिनौ सादिनः, तुरग्यपि तथा तुरगिणौ तुरगिणः ॥

(7) अयमपि पूर्ववत्, सादी सादिनौ सादिनः ॥

कृतहस्तः[1] कृतपुङ्खः[2] सुप्रयुक्तशरो हि सः ।
शीघ्रवेधी[1(1)] लघुहस्तोऽ[2]पराद्धेषु[1]स्तु लक्ष्यतः[(2)] ॥४३६॥
च्युतेषु दूरवेधी[1] तु दूरापाती[2] त्वायुधं[1] पुनः (३) ।
हेतिः[2] प्रहरणं[3] शस्त्र[4]मस्त्रं[5] तच्च चतुर्विधम् ॥४३७॥
मुक्तं द्विधा पाणि[1]यन्त्र[2]मुक्तं शक्ति-शरादिकम्(४) ।
अमुक्तं[3] शस्त्रिकादि स्याद् द्वन्द्वाद्यं तु द्वयात्मकम्[4(5)] ॥४३८॥
धनु(६)श्चापो[2]ऽस्त्र[3]मिष्वासः[4] कोदण्डं[5] धन्वकार्मुकम्[7(7)] ।
द्रुणा[8]ऽसौ[9] लस्तको[1]ऽस्यान्तरग्रं त्वर्त्ति[1]रटन्य[2]पि ॥४३९॥
मौर्वी[1] जीवा[2] गुणो[3] गव्या[4] शिञ्जा[5] बाणासनं[6] द्रुणा[7] ।
शिञ्जिनी[8] ज्या[9] च गोधा[1] तु तलं[2] ज्याघातवारणम् ॥४४०॥

---

(१) शीघ्रवेधिनौ शीघ्रवेधिनः ॥

(२) "समवेदपराद्धेषु यस्य लक्ष्याच्च्युतः शरः" इति ॥

(३) दूरवेधिनौ दूरवेधिनः, दूरापातिनौ दूरापातिनः ॥

(४) पाणिमुक्तं शक्त्यादि १ यन्त्रमुक्तं शरादि २ । "शक्त्यादि पाणिमुक्तं १ स्यादमुक्तं २ छुरिकादिकम् । मुक्तामुक्तं ३ च यष्ट्यादि यन्त्रमुक्तं ४ शरादिकम्" इति हलायुधः ॥

(५) मुक्तामुक्तस्य ॥

(६) धनुस्, धनु, धनू इति त्रीण्येव प्रातिपदिकानि दृश्यन्ते । धन्यते धनति शब्दायते ज्याघातेन वा धनुः इत्यर्थात्मक लिङ्गनिर्देशात् धनकति उप्रत्यये धनुरुकारान्तोऽपि, तावपि पुं क्लीबलिङ्गौ, कपि धनेति ऊप्रत्यये स्त्रीलिङ्गो धनूरपि, (पुं क्ली) धनुः धनुषौ धनुषः, धनुः धनुषी धनूंषि, पुं क्ली, धनुः धनू धनवः ॥

(७) धन्वनी धन्वानि नान्तः क्ली, अदन्तं ते [illegible] धन्वः पुं क्लीबलिङ्गः ॥

(१)स्थानान्या[१]लीढ[१]-वैशाख[२]-प्रत्यालीढानि[३] मण्डलम्[४] ।
समपादं[५] च वेध्यं[१] तु लक्ष्यं[२] लक्षं[३] शरव्यकम्[४] ॥४४१॥

बाणः[१] पृषत्क[२]-विशिखौ[३] खग[४]-गार्द्ध[६]पक्षौ[५]
काण्डा[६]-शुग[७]-प्रदर[८]-सायक[९]-पत्रवाहाः[१०] ।
पत्री[११]-ष्व[१२]-जिह्मग[१३]-शिलीमुख[१४]-कङ्कपत्र[१५]-
रोपाः[१६] कलम्ब[१७]-शर[१८]-मार्गण[१९]-चित्रपुङ्खाः[२०] ॥४४२॥

प्रक्ष्वेडनः[१] सर्वलोहो[२] नाराच[३] एषण[४] श्च सः ।
निरस्तः[१] प्रहिते बाणे विषाक्ते दिग्ध[१]-लिप्तकौ[२] ॥४४३॥
बाणमुक्ति र्व्यवच्छेदो[१] दीप्ति[१] र्वेगस्य तीव्रता(२) ।
क्षुरप्र[१]-तल्लला[२]-र्द्धेन्दु[३]-तीरी[४]-मुख्या स्तु तद्भिदः ॥४४४॥
पक्षो[१] वाजः[२] पत्रणा[१] तन्न्यासः पुङ्ख[१] स्तु कर्त्तरी[२] ।
तूणो[१] निषङ्ग[२] स्तूणीर[३] उपासङ्गः[४] शराश्रयः[५] ॥४४५॥

शरधिः[६] कलापो[७] ऽप्य थ चन्द्रहासः[१]
करवाल[२]-निस्त्रिंश[३]-कृपाण[४]-खड्गाः[५] ।
तरवारि[६]-कौक्षेयक[७]-मण्डलाग्रा[८]
असि[९]-र्ऋष्टि[१०]-रिष्टी[११] त्सरु[१]रस्य मुष्टिः ॥४४६॥

प्रत्याकारः[१] परीवारः[२] कोषः[३] खड्गपिधानकम्[४] ।
अडुनं[१] फलकं[२] चर्म[३] खेटका[४]-वरण[५]-स्फुराः[६](३) ॥४४७॥
अस्य मुष्टि स्तु संग्राहः[१] क्षुरी[१] छुरी[२] कृपाणिका[३] ।

---

(१) बाणमोचनावसरे स्थानानामेकैकम् ॥

(२) बाणभेदानामेकैकम् ॥

(३) स्फुर स्फुर्त्तिचलनयोः स्फुर चेति धातुद्वयादच् स्फुरति चलति स्फुरः । स्फुरकोऽप्यत्र एवं स्फुरः स्फुरक इत्यपि ॥

शस्त्र्य[4]सि धेनु[1]-पुत्र्यौ[1] च (1)पत्रपाली तु सा ऽऽयता ॥४४८॥
दण्डो[1] यष्टि[2]श्च लगुडः[3] स्याद् ईली[1] करवालिका[2] ।
भिन्दिपाले[1](2) सृगः[2] कुन्तो[1] प्रासो ऽथ द्रुघणो[1] घनः[2] ॥४४९॥
मुद्गरः[3] स्यात् कुठारः स्व(3) परशुः[2] पर्शु[3]-पशुधौ[4] ।
परश्वधः[5] स्वधिति[6]श्च परिघः[1] परिघातनः[2] ॥४५०॥
(4)सर्वला[1] तोमरे[2] शल्यं[1] शङ्कौ[2] शूले[1] त्रिशीर्षकम्[2] ।
शक्ति[1]-पट्टिश[1]-दुस्स्फोट[1]-चक्रा[1]द्याः(5) शस्त्रजातयः ॥४५१॥
(6)खुरली[1]तु श्रमो[2] योग्या[3] भ्यास[4] स्तद्भूः खलूरिका[1] ।
सर्वाभिसारः[1] सर्वौघः[2] सर्वसन्नहनं[3] समाः ॥४५२॥
लोहाभिसारो[1] दशम्यां विधि र्नीराजना त्परः ।
प्रस्थानं[1] गमनं[2] व्रज्या[3] ऽभिनिर्य्याणं[4] प्रयाणकम्[5] ॥४५३॥
यात्रा[6] ऽभिषेणनं[1] तु स्यात् सेनया ऽभिगमो रिपौ ।
स्यात् सुहृद्बल मासारः[1] प्रचक्रं[1] चलितं बलम् ॥४५४॥
प्रसार[1] स्तु प्रसरणं तृणकाष्ठादिहेतवे ।
अभिक्रमो[1] रणे यान मभीतस्य रिपून् प्रति ॥४५५॥

---

(1) असि धेनुः १ असि पुत्री २ ॥

(2) भिन्दिपालो नाम हस्तक्षेप्यो महाफलो दीर्घदण्ड आयुधविशेषः इत्यस्य टीका ॥

(3) कुठिः सौत्रः, कोठति कुठारः, पुं स्त्रीलिङ्गः, तथा कुठिभ्यां किदित्यारः कुठारः, कुठान् वृक्षानियर्त्तीति वा ॥

(4) सर्वलातोमरोऽस्त्रियामित्यमरः ॥

(5) चक्रः पुं क्लीं, चक्रः चक्रम् ॥

(6) शस्त्राभ्यासस्य ॥

अभ्यमित्रो[1] (1)ऽभ्यमित्रीयो[2] ऽभ्यमित्रीणो[3] ऽभ्य-मित्रगन् ।
स्यादुरस्वा[1]नुरसिल[2] (2)ऊर्जस्वि[1]-ऊर्जस्वलौ[2] समौ ॥४५६॥
सांयुगीनो[1] रणे साधु-र्जेता[1] जिष्णु[2]श्च जित्वरः[3] ।
जय्यो[1] यः शक्यते जेतुं जेयो[1] जेतव्यमात्रके ॥४५७॥
वैतालिका[1] बोधकरा[2] अर्थिका[3] सौखसुप्तिकाः[4] ।
घाण्टिका[1]श्चाक्रिकाः[2] सूतो[1] बन्दी[2](3) मङ्गलपाठकः ॥४५८॥
मागधो[1] मगधः[2] संशप्तका[1] युद्धा-निवर्त्तिनः ।
(4)नग्नः[1]स्तुतिव्रत[2]स्तस्य ग्रन्थो भोगावली[1] भवेत् ॥४५९॥

प्राणः[1]स्थाम[2]-तरः[3]-(5)पराक्र[4]-
मबल[5]-द्युम्नानि[6]शौर्य्यौ[7]-जसी[8],
(6)शुष्मं[9] शुष्म[10] च शक्ति[11] रूर्ज्ज[12]-
सहसी[13] युद्धं[1] तु संख्यं[2] कलिः[3] ।
संग्राम[4]-हव[5]-सम्प्रहार[6]-
समरा[7]-जन्यं[8]-युदा[9](7)योधनं[10],
संस्फोटः[11] कलहो[12] मृधं[13]
प्रहरणं[14] (8)संख्य[15] रणो[16] विग्रहः[17] ॥३६०॥

---

(१) शत्रुसम्मुखगामिनः ॥
(२) ऊर्जस्विन् इति छेदः ऊर्जस्विनौ ऊर्जस्विनः ॥
(३) बन्दिनौ बन्दिनः ॥
(४) पीतकौ पीतमाल परिधानो मङ्गलपाठकः ॥
(५) तरः तरसी तरांसि ॥
(६) ओजः ओजसि ओजांसि, शुष्म शुष्मणि शुष्माणि ॥
(७) युत् युधौ युधः, स्त्री । (८) संयत् संयती संयन्ति, स्त्री

द्वन्द्व[१८] समाघात[१९]-समाह्वया[२०]भि-
सम्पात[२१]-सम्प्रहार[२२]-समि[२३]-त्प्रघाताः[२४] ।
(१)आस्कन्दना[२५]-जि[२६]-प्रधनान्य[२७]ऽनीक[२८]-
मभ्यागम[२९] श्च प्रविदारणं[३०] च ॥४६१॥
समुदायः[३१] समुदयो[३२] राटिः[३३] समिति[३४]-सङ्गरौ[३५] ।
अभ्यामर्दः[३६] सम्परायः[३७] समीकं[३८] साम्परायिकम्[३९] ॥४६२॥
आक्रन्दः[४०] संयुगं[४१] चाथ नियुद्धं तद् भुजोद्भवम् ।
(२)पटहा[१]-डम्बरौ[२] तुल्यौ (३) तुमुलं[१] रणसङ्कुलम् ॥४६३॥
नासीरं त्व ग्रयानं[२] स्यादवमर्द[१] स्तु पीडनम्[२] ।
प्रपात[१] स्त्व वस्कन्दो[२] धाट्य[३] श्चासादनं[४] च सः ॥४६४॥
तद्रात्रौ सौप्तिकं[१] वीराशंसनं[१] त्वा जिभीष्मभूः ।
नियुद्धभू र क्षवाटो[१] मोहो[१] (४)मूर्च्छा[२] च कश्मलम्[१] ॥४६५॥
हूणे भाविनि वा युद्धे पानं स्या द्वीरपाणकम्[१] ।
पलायन[१] मपयानं[२] सन्द्राव[३]-द्राव[४]-विद्रवाः[५] ॥४६६॥
अपक्रमः[६] समु-त्से-ध्यो (५)द्रावोऽथ विजयो[१] जयः[२] ।
पराजयो[१] रणे भङ्गो (६)डमरो[१] भ्रम[२]-विप्लवौ[२] ॥४६७॥
वैरनिर्यातनं[१] वैरशुद्धि[२] र्वैरप्रतिक्रिया[३] ।

---

(१) समित् समितौ समिदः ॥
(२) बाहुयुद्धस्य ॥
(३) संग्रामवाद्यस्य ॥
(४) संग्रामे प्रहाराद्यैर्या वैचित्यं मूर्च्छा मूर्च्छनं तयोर्नामैकम् ॥
(५) सन्द्रावः १ उद्द्रावः २ प्रद्रावः ३ ॥
(६) उपद्रवस्य "लूट" इति भाषा ॥

लात्कार[१]स्तु प्रसभं[२][(१)] हठो[३]ऽथ स्खलितं[१] छलम्[२][(२)] ॥४६८॥
रा-पर्य्य-भिभूतौ[२] [(३)] जितो[४] भग्नः[५] पराजितः[६] ।
लायित[१]स्तु नष्टः[२] स्यात् गृहीतदिक्[३] तिरोहितः[४] ॥४६९॥
जितात्मवो[१] जितकाशी[२] प्रस्कन्न[१]-पतितौ[२] समौ ।
चारः[१] कारा[२]-गुप्तौ[२] बन्द्यां[१] ग्रहकः[२] प्रोपतौ[३] ग्रहः[४][(५)] ॥४७०॥
चातुर्वर्ण्यं[१] द्विज[१]-क्षत्र[२]-वैश्य[३]-शूद्रा[४] नृणां [(६)] भिदः ।
ब्रह्मचारी[१] [(७)] गृही[१] वानप्रस्थो[१] भिक्षु[१]रिति क्रमात् ॥४७१॥
चत्वार आश्रमा[१] स्तत्र वर्णी[१] स्यात् ब्रह्मचारिणि[२] ।
ज्येष्ठाश्रमी[१] गृहमेधी[२] गृहस्थः[३] स्नातको[४] गृही[५] ॥४७२॥
वैखानसो[१] वानप्रस्थो[२] भिक्षुः[१] सान्यासिको[२] यतिः[३] ।
कर्म्मन्दी[४] रक्तवसनः[५] परिव्राजक[६]-तापसौ[७] ॥४७३॥
पाराशरी[८] पारिकाङ्क्षी[९] मस्करी[१०] परिरक्षकः[११] ।

---

(१) प्रसभोऽस्त्रीति वैजयन्ती ॥

(२) "छद्मन्तु स्खलिते व्याजे" इति महेश्वरः । स्खलितं परस्य वदतः स्वाभिमतार्थान्तरविकल्पोपपादनेन वचनविघातः । यथा कूपो नवोदक इति चक्षुर्दर्शनम् । वादिना कूपो नवोदक इति कथायां नवीनार्थवाचकतया नवशब्दप्रयोगे कृते छलवादी नवसंख्यामारोप्य दूषयति कुत एक एव कूपो नवसंख्योदक इति । मतिभ्रंशादिकं वा । यथा माघः । "किं करोति नरः प्राज्ञः शूरो वाथ सुपण्डितः । दैवो यस्य छलान्वेषी करोति विफलाः क्रियाः" ॥

(३) पराभूतः १ परिभूतः २ अभिभूतः ३ ॥

(४) कारागारस्य ॥    (५) प्रग्रहः२ उपग्रहः ४ ॥

(६) एकैकम् ॥

(७) दण्डीव ब्रह्मचारी ॥

स्थाण्डिलः[1] स्थण्डिलशायी[2] यः शेते स्थण्डिले व्रतात् ॥४७४॥
तपःक्लेशसहो[1] दान्तः[2] शान्तः[1] श्रान्तो[2] जितेन्द्रियः[3]।
ब्रह्मदानं[1] वर्णी ब्रह्म ब्राह्मणः[1] स्तु त्रयीमुखः[2] ॥४७५॥
भूदेवो[3] वाडवो[4] विप्रो[5] द्व्य-ग्राभ्यां[6] जाति[7]-जन्म[8]-जाः[11](1)।
वर्णज्येष्ठः[12] सूत्रकण्ठः[13] षट्कर्मा[14] मुखसम्भवः[15] ॥४७६॥
वेदगर्भः[16] शमीगर्भः[17] सावित्रो[18] मैत्र[19] एतशः[20](2)।
बटुः[1] पुनर्माणवको[2] भिक्षा[1] स्यात् ग्रासमात्रकम्(3) ॥४७७॥
उपनाय[1]स्तूपनयो[2] बटूकरण[3] मानयः[4](4)।
अग्नीन्धनं(5) त्वग्निकार्य्य[2]माग्नीध्रा[3]ऽऽग्निकारिका[4] ॥४७८॥
पालाशो[1] दण्ड आषाढो[2] व्रते राम्भ[1] स्तु (6) वैणवः[2]।
बैल्वः[1] सारस्वतो रौच्यः[2] पैलव[1] स्त्वौ परैभिकः[2](7) ॥४७९॥
आश्वत्थ[1] स्तु जितनेमि[2] रौदुम्बर[1] उलूखलः[2]।
जटा[1] सटा[2] वृषी[1] पीठं[2] कुण्डिका[1] तु कमण्डलुः ॥४८०॥

---

(१) "मातुरग्रे विजननं द्वितीयं मौञ्जीबन्धनमिति" स्मृतेः। द्विजातिः १ द्विजन्मा २ द्विजः ३ अग्रजातिः ४ अग्रजन्मा ५ अग्रजः ६।

(२) एतशः एकादशस्वरादिस्तवर्गाद्यमध्योदन्त्यान्तश्च।

(३) "ग्रासप्रमाणं भिक्षास्यादग्रं ग्रासचतुष्टयम्, अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः।"॥

(४) यन्मनुः "गर्भाष्टमे ऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्" चत्वारि मौञ्जीबन्धनस्य॥

(५) समित्काष्ठैरग्निदीपनस्य॥

(६) रम्भाशब्दो वेणुपर्याय इति टीका, रम्भाया विकारो राम्भः।

(७) औपरोधिक इति वा पाठः॥

श्रोत्रिय[१]श्छान्दसो[२] यष्टा[१] त्वा देष्टा[२] स्या(१)न्मखे व्रती[३] ।
याजको[४] यजमान[५]श्च सोमयाजी[१] तु दीक्षितः[२] ॥४८१॥
इज्याशीलो[१] यायजूको[२] यज्वा[१] स्यादासुतीवलः[२] ।
सोमपः[१] सोमपीथी[२] स्यात् स्थपति[१]र्गीष्पतीष्टिकृत् ॥५८२॥
सर्ववेदा[१]स्तु (२)सर्वस्वदक्षिणं यज्ञ मिष्टवान् ।
यजुर्वि[१]दध्वर्यु[२]र्ऋग्वि[१]द्धोता[२] द्गाता[१]तु (३)सामवित्[२] ॥४८३॥
यज्ञो[१] यागः[२] सवः[३] सत्रं[४] स्तोमो[५] मन्यु[६]र्मखः[७] क्रतुः[८] ।
संस्तरः[९] सप्ततन्तु[१०]र्वितानं[११] बर्हि[१२]रध्वरः[१३](४) ॥४८४॥
अध्ययनं[१] (५)ब्रह्मयज्ञः[२] स्याद्देवयज्ञ[१] आहुतिः[२] ।
होमो[३] होत्रं[४] वषट्कारः[५] पितृयज्ञ[१]स्तु तर्पणम्[२](६) ॥४८५॥
तच्छ्राद्धं[३] पिण्डदानं[४] च नृयज्ञो[१]ऽतिथिपूजनम्[२] ।
भूतयज्ञो[१] बलिः[२] पञ्च महायज्ञा[१] भवन्त्यमी ॥४८६॥
पौर्णमास[१]श्च दर्श[१]श्च यज्ञौ पक्षान्तयोः पृथक् ।
सौमिकी[१] दीक्षणीयेष्टि(७)र्दीक्षा तु व्रतसंग्रहः[२] ॥४८७॥
इतिः स्रुगहना जुह्वा[१](८) वेदी[१] भूमिः परिष्कृता ।

---

(१) यष्टारौ यष्टारः, आदेष्टारौ आदेष्टारः ॥

(२) सर्ववेदसौ सर्ववेदसः ॥

(३) उद्गातारौ उद्गातारः ॥

(४) क्ली, बर्हिषी बर्हींषि ॥

(५) ब्राह्मणोवेदस्य यजनं दानादि स ब्रह्मयज्ञः ॥

(६) मन्त्रपूर्वकं जलदानं तर्पणम् ॥ (७) दीक्षणी यस्य दीक्षार्हस्य इष्टिर्यज्ञः चन्द्रनिमित्तयागविशेषोऽयम् ॥

(८) [illegible] ॥

स्थण्डिलं[1] चत्वरं[2] चा थ यूपः[1] स्याद्यज्ञकीलकः ॥४८८॥
चषालो[1] यूपकटको(१) यूपकर्णो घृतावनी(२) ।
यूपाग्रभागे स्या त्तर्म्मा(३)ऽरणि[1] र्निर्मन्थ्यदारुणि ॥४८९॥
स्यु र्दक्षिणा[1]-ऽऽहवनीय[1]-गार्हपत्या[1] स्त्रयो ऽग्नयः ।
इद मग्नित्रयं त्रेता[1] प्रणीतः[1] संस्कृतो ऽनलः ॥४९०॥
ऋक् सामिधेनी[1] धाय्या[2] च समिदा धीयते यया ।
समि[1]दि न्धन[2]मेध[3]-इध्म[4]-तर्पणा[5]-ऽऽधांसि[6] भस्म[1] तु(४) ॥४९१॥
स्याद् भूति[2] र्भसितं[3] रक्षा[4] क्षारः[5] पात्रं[1] स्रुवादिकम् ।
स्रुवः[1] स्रुग[2]ऽधरा सो पभृज्जुहूः[1](५) पुन रुत्तरा ॥४९२॥
ध्रुवा[1] तु सर्व्वसंज्ञार्थं यस्या मा ज्यं निधीयते ।
यो ऽभिमन्त्र्य निहन्येत मखे पशु रुपाकृतः[1] ॥४९३॥
परम्पराकं[1] शमनं[2] प्रोक्षणं[3] च मखे बधः ।
हिंसार्थं कर्म्मा भिचारः[1] स्या द्यज्ञार्हं तु यज्ञियम्[1] ॥४९४॥
हविः[1] सान्नाय्य[2] मामिक्षा शृतोष्णक्षीरगं दधि ।
क्षीरशरः[2] पयस्या[3] च त न्मस्तुनि(६) तु वाजिनम्[1] ॥४९५॥

---

(१) सूत्रधारघटिता यूपशिरसि कटकाकृतिः ॥

(२) घृतसिञ्चनस्थाने ॥

(३) वाचस्पतिस्तु "यूपाग्रेतर्म्म नस्त्रियामिति" पुंस्याह, तर्म्मते तर्म्मा तर्म्माणौ तर्म्माणः, इत्याद्यपि । अन्यत्र तर्म्मणी तर्म्माणि नान्तः क्ली, अरणिः पुं स्त्री ॥

(४) भस्म भस्मनी भस्मानि ॥

(५) उपभृतौ उपभृतः स्त्री, जुह्वौ जुह्वः ॥

(६) तस्या आमिक्षाया मध्ये ॥

हव्यं[१] सुरेभ्यो दातव्यं पितृभ्यः कव्य[१] मोदनम्[१] ।
आज्ये तु दधिसंयुक्ते पृषदाज्यं[१] पृषातकः[२] ॥४९६॥
दध्ना तु मधु संयुक्तं मधुपर्कं महोदयः ।
हवित्री[१](१) तु होमकुण्डं हव्यपाकः[१](२) पुनश्चरुः[२] ॥४९७॥
अमृतं[१] यज्ञशेषे[२] स्या द्विघसो[१] भुक्तशेषके[२] ।
यज्ञान्तोऽवभृथः[२] पूर्वं वाप्या-दीष्टं[१] मखक्रिया ॥४९८॥
इष्टापूर्त्तं[१] तदुभयं वर्हिर्मुष्टि स्तु विष्टरः[१] ।
अग्निहोत्र्य[१](३)ग्निचि[२]च्चा हिताग्ना[२]वथाऽग्निरक्षणम्[१] ॥४९९॥
अग्न्याधानं[२] मग्निहोत्रं दर्वी[१] तु घृतलेखनी ।
होमाग्नि[१] स्तु महाज्वालो[१] महावीरः[२] प्रवर्ग्य[४]-वत् ॥५००॥
होमधूम स्तु निगणो[१] होमभस्म तु वैष्टुतम्[१](४) ॥
उपस्पर्श[१]स्त्वाचमनं[२] धारा[१]सेकौ[२] तु सेचने[३] ॥५०१॥
ब्रह्मासनं ध्यानयोगासनेऽथ ब्रह्मवर्चसम्[१](५) ।
वृत्ताध्ययनर्द्धिः पाठे स्याद् ब्रह्माञ्जलि[१]रञ्जलिः ॥५०२॥
पाठे तु मुखनिष्क्रान्ता विप्रुषो ब्रह्मबिन्दवः[१] ।
साकल्यवचनं(६) पारायणं[१] कल्पो[१] विधि[२]-क्रमौ[२] ॥५०३॥

---

(१) हूयतेऽस्यां हवित्री ॥

(२) हव्यस्य पाकः पचनमत्र हव्यपाकः स्थालीति केचित् ॥

(३) अग्निहोत्रिणौ अग्निहोत्रिणः, अग्निचितौ अग्निचितः ॥

(४) विशेषेण स्तूयते स्म विष्टुतोऽग्निस्तस्येदं वैष्टुतम् ॥

(५) ब्रह्मणो वर्चस्तेजो ब्रह्मवर्चसम् । चरित्राध्ययनसम्पन्ने ॥

(६) सकलस्य भावः साकल्यं साकल्येन सामस्त्येन वचनम् अध्ययनम् । "साकल्यवचनं प्राज्ञैः पारायणमुदाहृतम्" इति हलायुधः ॥

मूले ऽङ्गुष्ठस्य स्याद्ब्राह्मं[1] तीर्थं कायं[1] कनिष्ठयोः।
पित्र्यं[1] तर्जन्यङ्गुष्ठान्त र्दैवतं[1] त्व ऽङ्गुलीमुखे॥५०४॥
ब्रह्मत्वं[1] तु ब्रह्मभूयं[2] ब्रह्मसायुज्य[3] मित्यपि।
देवभूया[4]-दिकं(1) तद्वद्योपाकरणं[1] श्रुतेः॥५०५॥
संस्कारपूर्वं ग्रहणं स्यात् स्वाध्यायः[1] पुन र्जपः[2]।
औपवस्त्रं[1](2) तूपवासः[2] कृच्छ्रं[1] सान्तपनादिकम्॥५०६॥
प्रायः[1] सन्न्यास्य-नशने नियमः[1] पुण्यकं[2] व्रतम्[3](3)।
चरितं[1] चरिता[2]-चारौ[3] चारित्र[4]-चरणे[5] अपि॥५०७॥
वृत्तं[6] शीलं[7] च सर्वैनोध्वंसि जप्ये ऽघमर्षणम्।
नमा स्तु पादग्रहणा[1]-भिवादनो[2]-पसङ्ग्रहाः[3]॥५०८॥
उपवीतं[1] यज्ञसूत्रं[2] प्रोद्धृते दक्षिणे करे(4)।
प्राचीनावीत[1] मन्यस्मिन्निवीतं[1] कण्ठलम्बितम्॥५०९॥
प्राचेतस[1] स्तु वाल्मीकि[2] र्वल्मीक[3]-कुशिनौ[4] कविः[5]।
मैत्रावरुणि[6]-वाल्मीकौ[7] वेदव्यास[1] स्तु माठरः[2]॥५१०॥
द्वैपायनः[3] पाराशर्यः[4] कानीनो[5] बादरायणः[6]।

---

(1) आदिशब्दात् स्वर्गभूयं स्वर्गत्वं स्वर्ग सायुज्यम् इति॥

(2) औपवस्त्रं उपवस्ता प्राप्तोऽस्य औपवस्त्रम् प्रज्ञादिभ्य इत्यण् "वस्तच् स्तम्भे" इत्यस्मात् क्ते उपवस्तास्तदौपवस्तमित्यन्ये, उपवस्त-मित्यन्ये, उपवस्तुरिदमित्यन्योऽपि यत् स्मृतिः "माषान्मधु मस्तूरांश्च वर्जयेदौपवस्त्रके" इति। "औपवस्त्रमुपवस्त्रमौपवस्त्रोपवस्तके" इति शब्दरत्नाकरः॥

(3) पुं क्ली, व्रतः व्रतमिति यावत्॥

(4) दक्षिणे करे प्रोद्धृते इति दक्षिणकराधोनिःक्षिप्ते सूत्रे इत्यर्थः॥

व्यासो[७] ऽस्याऽम्बा सत्यवती[१] वासवी[२] गन्धकालिका[३] ॥५१२॥
योजनगन्धा[४] दाशेयी[५] शालङ्कायनजा[६] च सा।
जामदग्न्य[१]स्तु रामः[२] स्यात् भार्गवो[३] रेणुकासुतः[४] ॥५१३॥
नारद[१]स्तु देवब्रह्मा[२] पिशुनः[३] कलिकारकः[४]।
[१]वशिष्ठो[१]ऽरुन्धतीजानि[२]-रक्षमाला[१] त्वरुन्धती[२]॥५१३॥
त्रिशङ्कुयाजी[१] गाधेयो[२] विश्वामित्र[३]श्च कौशिकः[४]।
कृशारणि[१]स्तु दुर्वासाः[२][२] शतानन्द[१]स्तु गौतमः[२]॥५१४॥
याज्ञवल्क्यो[१] ब्रह्मरातिर्[२] योगेशो[३]ऽथ पाणिनौ[२]।
[३]शालातुरीय[२]-दाक्षेयौ[२] गोनर्दीये[१] पतञ्जलिः[२] ॥५१५॥
कात्यायनो[१] वररुचि[२]र्मेधाजि[३]च्च पुनर्वसुः[४]।
अथ व्याडि[१]र्विन्ध्यवासी[२] नन्दिनीतनय[३]श्च सः ॥५१६॥
स्फोटायन[१]स्तु कक्षीवान्[२][४] पालकाप्यः[२] करेणुभूः[२]।
वात्स्यायनो[१] मल्लनागः[२] कौटिल्य[३][५] श्चणकात्मजः[४] ॥५१७॥
द्रामिलः[५] पक्षिलस्वामी[६] विष्णुगुप्तो[७]ऽङ्गुल[८]श्च सः।

(१) अयं दन्त्यसानपि, अतिशयेन वसुमान् वसिष्ठः, गुणाङ्गादितीष्ठि निमतोर्ण्ठेति मतोर्लुपि मत्वं सरादेरित्यक्षरादिलापः ॥

(२) दुर्वासस् दुर्वाससः ॥

(३) सलातुरः आभिजनो निवासोऽस्य सालातुरीयः सलातुरादीयण् ॥

(४) कक्षीवन्तो कक्षीवन्तः ॥

(५) कौटल्य इति वा। कुटो घटः तानि कुटना शालधान्याः, तेषामपत्यं कौटल्यः, यद्यपि टीका अता एतत्साधितं तथापि पुस्तकमात्रे कौटिल्य इत्येव दृश्यते ॥

अतव्रतोऽवकीर्णी[१][(१)] स्यात् व्रात्यः[१] संस्कारवर्जितः ॥५१८॥
शिखिद्दानः[१] कृष्णकर्म्मा ब्रह्मबन्धु[१]र्द्विजोऽधमः ।
नष्टाग्नि र्वीरहा[१] जातिमात्रजीवी द्विजब्रुवः[१] ॥५१९॥
धर्म्मध्वजी[१] लिङ्गवृत्ति[२] र्वेदहीनो[१] निराकृतिः[२] ।
वार्त्ताशी[१] भोजनार्थं यो गोत्रादि वदति स्वकम् ॥५२०॥
उच्छिष्टभोजनो[१] देव-नैवेद्यबलिभोजनः।
अजप[१][(२)] स्त्व सदध्येता[२] शाखारण्डो[१] ऽन्यशाखकः[२] ॥५२१॥
शस्त्राजीवः[१] काण्डस्पृष्टो[२] गुरुहा[१] नरकीलकः[२] ।
मणो[१] देवादिपूजाया मभ्राड्डो ऽथ मलिम्लुचः[१] ॥५२२॥
पञ्चयज्ञपरिभ्रष्टो निषिद्धैकरुचिः खरुः[२] ।
सुप्ते यस्मि न्नुदेत्य ऽर्को ऽस्तमेति क्रमेण तौ ॥५२३॥
अभ्युदिता[१]-भिनिर्मुक्तौ[१] वीरोज्झो[१] न जुहोति यः ।
अग्निहोत्रछलात् याञ्चापरो वीरोपजीवकः[१] ॥५२४॥
वीरविप्लावको[१] जुहु द्धनैः शूद्रसमाहृतैः[(३)] ।
[(४)]स्याद्वादवाद्या[१] र्हतः[२] स्या च्छून्यवादी[१] तु सौगतः[२] ॥५२५॥
नैयायिक[१] स्त्वा ऽक्षपादो[२] योगः[२] साङ्ख्य[१]स्तु कापिलः[२] ।
वैशेषिकः[१] स्यादौलूक्यो[२] बार्हस्पत्य[१] स्तु नास्तिकः[२] ॥५२६॥

---

(१) अवकीर्णिनौ व्यवकीर्णिनः ॥

(२) नास्ति जपः स्वाध्यायोऽस्य ॥

(३) शूद्रेभ्यः समाहृतैः ॥

(४) स्याद्वादवादिनौ स्याद्वादवादिनः। "स्यादस्ति" "स्यान्नास्ति" इत्येवं रीत्या वक्तुं शीलाः। स्याद्वाद सप्तभङ्गिनयो इत्यर्हतां युक्तिनामनि।

चार्वाको[३] लौकायतिक[४] श्चैते षडपि तार्किकाः[१] ।
क्षत्रं[१] तु क्षत्रियो[२] राजा[३] राजन्यो[४] बाहुसम्भवः[५] ॥५२७॥
अर्य्यो[१] भूमिस्पृशो[२] वैश्या[३] ऊरव्या[४] ऊरुजा[५] विशः[६] ।
वाणिज्यं[१] पाशुपाल्यं[२] च कर्षणं[३] चेति[(१)] वृत्तयः[१] ॥५२८॥
आजीवो[१] जीवनं[२] वार्त्ता[३] जीविका[४] वृत्ति[५]-वेतने[६] ।
उञ्छो[१] धान्यकणादानं कणिशाद्यर्जनं शिलम्[१] ॥५२९॥
ऋतं[१] तद्द्वय मनृतं[१] कृषि[२] र्मृतं[१] न्तु याचितम्[१] ॥
अयाचितं[१] स्या दमृतं[२] सेवावृत्तिः[१] श्वजीविका[२] ॥५३०॥
सत्यानृतं[१] तु वाणिज्यं[२] वणिज्या[३] वाणिजो[१] वणिक्[२] ।
क्रयविक्रयिकः[३] पण्याजीवा[४]-पणिक[५]-नैगमाः[६] ॥५३१॥
वैदेहः[७] सार्थवाह[८]श्च क्रायकः[१] क्रयिकः[२] क्रयी[३] ।
क्रेयदे[१] तु विपूर्वा[(२)] स्ते मूल्यं[१] वस्ना[२]-र्घ[३]-वक्रयाः[४] ॥५३२॥
मूलद्रव्यं परिपणो[१] नीवी[२] लाभो[१] ऽधिकं फलम्[२] ।
परिदानं[१] विनिमयो[२] नैमेयः[३] परिवर्त्तनम्[४] ॥५३३॥
व्यतिहारः[५] परावर्त्तो[६] वैमेयो[७] निमयो[८(३)] ऽपि च ।
निक्षेपो[१]-पनिधी[२]न्यासे[१] प्रतिदानं[१] तदर्पणम् ॥५३४॥
क्रेतव्यमात्रके[१] क्रेयं[२] क्रय्यं[१] न्यस्तं क्रयाय यत् ।
पणितव्यं[१] तु विक्रेयं[२] पण्यं[३] सत्यापनं[१] पुनः ॥५३५॥
सत्यङ्कारः[२] सत्याकृति[३] स्तुल्यौ विपण विक्रयौ[२] ।

(१) एकैकं ज्ञेयम् ॥

(२) विक्रायकः १ विक्रायिकः २ विक्रयी ३ विक्रयिता ४ ॥

(३) नैमेय निमयोऽपि च, वैमेय विमयोऽपि च, इति पाठद्वयमपि भवति ॥

गण्यं[1](1) गणेयं[2] संख्येयं[3] संख्या त्वेकादिका भवेत् ॥५३६॥
यथोत्तरं दशगुणं(2) भवेदेको[1] दशा[2]ऽमुतः ।
शतं[3] सहस्र[4]मयुतं[5] लक्ष[6] प्रयुत[7]-कोटयः[8] ॥५३७॥
अर्बुद[8]मब्जं[10] खर्व्वं[11] च निखर्व्वं[12] च महाम्बुजम्[13] ।
शङ्कु[14]र्वार्द्धि[15]रन्त्यं[16] मध्यं[17] परार्द्धं[18] चेति नामतः ॥५३८॥
असंख्यं[1] द्वीप-वार्द्धा-दि पुद्गला-त्मा-द्य ऽनन्तकम्[1] ।
सांय्यात्रिकः[1] पोतवणिग् यानपात्रं[1] वहित्रकम्[2] ॥५३९॥
बोहित्थं[3] वहनं[4] पोतः[5] पोतवाहो[1] नियामकः[2] ।
निर्य्यामः[3] कर्णधार[1]स्तु नाविको[2] नौ[1]स्तु मङ्गिनी[2] ॥५४०॥
तरी[3]-तरण्यौ[4] वेड़ा[5]ऽथ द्रोणी[1] काष्ठाम्बुवाहिनी ।
नौकादण्डः क्षेपणी[1]स्या द्गुणवृक्ष[1]स्तु कूपकः[2] ॥५४१॥
पोलिन्दा[1]स्त्व ऽन्तरादण्डाः स्या न्मङ्गो[1] मङ्गिनीशिरः ।
अभ्रि[1]स्तु काष्ठकुद्दालः सेकपात्रं[1] तु सेचनम् ॥५४२॥
केनिपातः[1] कोटिपात्र[1] मरित्र[2] ऽथो डुपः[1] प्लवः[2] ।
कोलो[3] भेल[4] स्तरण्ड[5] श्च स्या त्तरपण्य मातरः[1] ॥५४३॥
वृद्ध्याजीवो[1] द्वैगुणिको[2] वार्द्धुषिकः[3] कुसीदिकः[4] ।
वार्द्धुषि[5]श्च कुसीदा[1]र्थ प्रयोगो[2] वृद्धिजीवने ॥५४४॥
वृद्धिः[1] कलान्तर[2]मृणं[1] तू द्धारः[2] पर्युदञ्चनम्[3] ।

(१) गणसंख्याने कवर्गतृतीयाद्यस्वरादिर्धातुः ॥

(२) दशगुणसंख्या यस्मिन् तद्दशगुणं क्रियाविशेषणमेतत्, यथा एकादशाभिर्गुणितो दश भवेत् ॥

(३) सांयात्रिक इत्यपि ॥

याञ्चयाप्तं याचितकं[१] परिवृत्त्याऽपमित्यकम् ॥५४५॥
अधमर्णो[१] ग्राहकः स्या दुत्तमर्णो[१] स्तु दायकः ।
प्रतिभू[१]र्लग्नकः[१(१)] साक्षी[१] स्थेय[२] आधि[१] स्तु बन्धकः[२] ॥५४६॥
तुलाद्यैः पौतवं[१] मानं द्रवयं[१] कुडवादिभिः ।
पाय्यं[१] हस्तादिभि स्तत स्याद् गुञ्जाः पञ्च माषकः[२] ॥५४७॥
ते तु षोडश कर्षो[१] ऽक्षः[२] पलं[१] कर्षचतुष्टयम् ।
बिस्तः[१] सुवर्णो[२] हेम्नो ऽक्षे कुरुबिस्त[१] स्तु तत् पले ॥५४८॥
तुला[१] पलशतं तासां विंशत्या भार[१] आचितः[२] ।
शाकटः[३] शाकटीन[४] श्च शलाट[५] स्ते दशा[६] चितः[१] ॥५४९॥
चतुर्भिः कुडवैः प्रस्थः[१] प्रस्थै श्चतुर्भि राढकः[१] ।
चतुर्भि राढकै द्रोणः[१] खारी[१] षोडशभि श्च तैः ॥५५०॥
चतुर्विंशत्या ऽङ्गुलानां हस्तो[१] दण्ड[१] श्चतुष्करः ।
तत्सहस्रौ तु गव्यूतं[१] क्रोश[१] स्तौ द्वौ तु गोरुतम्[१] ॥५५१॥
गव्या[२] गव्यूत[३]-गव्यूती[४] चतुःक्रोशं तु योजनम्[१] ।
पाशुपाल्यं[१] जीववृत्ति[२] र्गोमान्[१] गोमी[२] गवीश्वरे[३] ॥५५२॥
गोपाले[१] गोधुग्[२] आभीर[३]-गोप[४]-गोसङ्ख्य[५]-वल्लवाः[६] ।
गोविन्दो[१] ऽधिकृतो गोषु जाबाल[१] स्त्व ऽजजीविकः[१] ॥५५३॥
कुटुम्बी[१] कर्षकः[२] क्षेत्री[३] हली[४] कृषिक[५]-कार्षकौ[६] ।
कृषीवलो[७] ऽपि जित्या[१(२)] तु हलिः[२] सीर[१] स्तु लाङ्गलम्[२] ॥५५४॥
गोदारणं[१] हल[४] मीषा[१]-सीते[१]त-ह्रण्ड पद्धती ।

(१) जामिन इति ख्यातस्य ॥

(२) ईहलस्य ॥

निरीषं(२) कुटकं फाले कृषकः कुशिकः फलम् ॥५५५॥
दात्रं लवित्रं तन्मुष्टौ वण्टो मत्यं समीकृतौ।
गोदारणं तु कुद्दालः खनित्रं त्ववदारणम् ॥५५६॥
प्रतोदस्तु प्रवयणं प्राजनं तोत्र-तोदने।
योत्रं तु योक्त्रमाबन्धः कोटिशो लोष्टभेदनः ॥५५७॥
मेधि मेथिः खलेवाली खले गोबन्धदारु यत्।
शूद्रोऽन्त्यवर्णो वृषलः पद्यः पज्जो जघन्यजः ॥५५८॥
ते तु मूर्द्धावसिक्ताद्या ऽऽरथकृन्मिश्रजातयः।
क्षत्रियायां द्विजान्मूर्द्धावसिक्तो, विट्स्त्रियां पुनः ॥५५९॥
अम्बष्ठोऽथ पारशव-निषादौ शूद्रयोषिति।
जन्मा माहिष्यो वैश्याया मुग्रस्तु वृषलस्त्रियाम् ॥५६०॥
वैश्यात्तु करणः शूद्रा त्त्वायोगवो विशःस्त्रियाम्।
क्षत्रियायां पुनः क्षत्ता चण्डालो ब्राह्मणस्त्रियाम् ॥५६१॥
वैश्यात्तु मागधः क्षत्त्रां वैदेहको द्विजस्त्रियाम्।
सूतस्तु क्षत्रिया ज्जात इति द्वादश तद्भिदः ॥५६२॥
माहिष्येण तु जातः स्यात्करण्यां रथकारकः।
कारुस्तु कारी प्रकृतिः शिल्पी श्रेणिस्तु तद्गणः ॥५६३॥
शिल्पं कला विज्ञानं च मालाकारस्तु मालिकः।
पुष्पाजीवः पुष्पलावी पुष्पाणामवचायिनी ॥५६४॥
कल्यपालः सुराजीवी शौण्डिको मण्डहारकः।

---

(२) यस्याग्रे फालो विबध्यते तस्य निष्क्रान्ता ईषा यस्मात् ॥

वारिवासः[५] पानवणिक्[६] ध्वजो[७](१) ध्वजा[८] सुतीवलः[९] ॥५६५॥
मद्यं[१] मदिष्ठा[२] मदिरा[३] परिस्रुता[४]
कश्यं[५] परिस्रु[६]न्मधु[७] कापिशायनम् ।
गन्धोत्तमा[९] कल्य[१०] मिरा[११] परिप्लुता[१२]
कादम्बरी[१३] स्वादुरसा[१४] हलिप्रिया[१५] ॥५६६॥
शुण्डा[१६] हाला[१७] हारहूरं[१८] प्रसन्ना[१९] वारुणी[२०] सुरा[२१] ।
माध्वीकं[२२](२) मदना[२३] देवसृष्टा[२४] कापिशा[२५] मब्धिजा[२६] ॥५६७॥
मध्वासवे[१] माधवको[२] मैरेये[१](३) शीधु[२] रासवः[३](४) ।
जगलो[१] मेदको[२] मद्यपङ्कः[३] किण्वं[१] तु नग्नहूः[२] ॥५६८॥
नग्नहु[३] मद्यबीजं[४] च मद्यसन्धानमा[१] सुतिः[२] ।
(५)आसवो[३] ऽभिषवो[४] मद्यमण्ड[१]-कारोत्तमौ[२] समौ ॥५६९॥
गल्वर्क[१]स्तु चषकः[२] स्या त्सरक[३] श्चा नुतर्षणम्[४] ।
शुण्डा[१] पानमदस्थानं मधुवारा[१] मधुक्रमाः[२](६) ॥५७०॥

---

(१) "पानवणिजौ पानवणिजः ।" "ध्वजिनौ ध्वजिनः ।" "यथा दण्डचक्री समो ध्वजः ।"

(२) माध्वत्यनयामाध्वीकं स्त्रीकाल्लीके इकै निपात्यते म्रद्दीक विकारोमार्द्वीकमित्यन्यं, मार्द्वीक इति वा ॥

(३) मिराथां देशे भवो गौडग्राः सुराया विशेषो मैरेयः नद्या दित्वादेयण् मीरे समुद्रे भव इति वा तत्र । शेरतेऽनेन शीकी धुक् पुं-क्लीवलिङ्गावेतौ ॥

(४) आसूयते आसवः । सुरा चतुर्धा "गौडी १ पैष्टी २ च माध्वी ३ च फलोत्था ४ च सुराः स्मृता" इति ॥

(५) आसवनमासवः, एवमभिषवश्च ॥

(६) मद्यपानावसरस्य हे ॥

सपीतिः[1] सहपानं[2](१) स्या दापानं[1] पानगोष्ठिका[2] ।
उपदंश[1] स्त्ववदंश[2] श्चक्षणं[3] मद्यपाशनम्(२) ॥५७१॥
नाड़िन्धमः[1] स्वर्णकारः[2] कलादो[3] मुष्टिक[4] श्च सः ।
तैजसावर्त्तनी[1] मूषा[2] भस्त्रा[1] चर्म्मप्रसेविका[2](३) ॥५७२॥
आस्फोटनी[1] वेधनिका[2] शाण[1] स्तु निकषः[2] कषः[3] ।
सन्दंशः[1] स्या त्कङ्कमुखो[2] भ्रमः[1] कुन्दं[2] च यन्त्रकम्[3] ॥५७३॥
वैकटिको[1] मणिकारः[2] शौल्विक[1] स्ताम्रकुट्टकः[2] ।
शाङ्खिकः[1] स्या त्काम्बविक[2] स्तुन्नवाय[1] स्तु सौचिकः[2] ॥५७४॥
कृपाणी[1] कर्त्तरी[2] कल्पन्य[3] पि सूची[1] तु सेवनी[2] ।
सूचिसूत्रं[1] पिप्पलकं[2] तर्कुः[1] कर्त्तनसाधनम्[2] ॥५७५॥
पिञ्जनं[1] विहननं[2] च तूलस्फोटनकार्मुकम् ।
सेवनं[1] सीवनं[2] स्यूति[3] स्तुल्यौ स्यूत[1]-प्रसेवकौ[2] ॥५७६॥
तन्तुवायः[1] कुविन्दः[2] स्यात् त्रसरः[1] सूत्रवेष्टनम्[2] ।
वाणि[1] र्व्यूति[2] र्वानदण्डो[1] वेमा[2](४) सूत्राणि[1] तन्तवः[2](५) ॥५७७॥
निर्णेजक[1] स्तु रजकः[2] पादुकाकृ[1] त्तु चर्म्मकृत्[2](६) ।

(१) मिलित्वा मद्यपाने द्वे । मद्यपानस्थानेपि द्वे ॥

(२) मद्यपानरुचिकरभक्ष्यस्य चत्वारि ॥

(३) "पुंसि चर्म्मप्रसेवकः" इति कोषान्तरम् ॥

(४) वेमानौ वेमानः, वेम वेम्नी, वेमनी वेमानि इत्यादि क्लीबे

(५) तन्तुः पुं क्ली, तन्त्रमप्यत्र यदनेकार्थः "तन्त्रं सिद्धान्तेराष्ट्र परच्छन्दप्रधानयोः । प्रकृते कुटुम्बकृत्ये च तन्तुवाने परिच्छदे श्रु शाखान्तरे शास्त्रे करणे द्व्यर्थसाधके" इति ॥

(६) रजकस्य द्वे, चर्म्मकारस्यापि द्वे ॥

उपानत्[1] पादुका[2] पादूः[3] पन्नद्धा[4] पादरक्षणम्[5] ॥५७८॥
प्राणाहिता[6(1)] ऽनुपदीना[1] स्याद्बद्धा ऽनुपदं हि या ।
नध्री[1] वध्री[2] वरत्रा[3] स्यादारा[1] चर्म्मप्रभेदिका[2] ॥५७९॥
कुलालः[1] स्यात् कुम्भकारो[2] दण्डभृ[3] च्चक्रजीवकः[4] ।
शाणाजीवः[1] शस्त्रमार्जो[2] भ्रमासक्तो[3] ऽसिधावकः[4] ॥५८०॥
सूर्मि[1] श्चाक्रिक[2] स्तैली[3] स्यात् पिण्याक[1]-खलौ[2] समौ ।
रथकृत्[1] स्थपति[2] स्त्वष्टा[3(2)] काष्ठतट्[4] तक्ष[5]-वर्द्धकी[6] ॥५८१॥
ग्रामायत्तो ग्रामतक्षः[1] कौटतक्षो[1] ऽनधीनकः ।
वृक्षभि[1] त्तक्षणी[2] वासी[3] क्रकचं[1] करपत्रकम्[2] ॥५८२॥
स उद्घनो[1] यत्र काष्ठे काष्ठं निक्षिप्य तक्षते ।
वृक्षादनो[1] वृक्षभेदी[2] टङ्कः[1] पाषाणदारकः[2] ॥५८३॥
व्योकारः[1] कर्मारो[2] लोहकारः[3] कूटं[1] त्व ऽयोघनः[2] ।
(३)व्रश्चनः[1] पत्रपरशु[2] रीषीका[1] तूलिके[2] षिका[3] ॥५८४॥
भक्ष्यकारः[1] कान्दविकः[2] कन्दु[1]-स्वेदनिके[2] समे ।
रङ्गाजीव[1] स्तौलिकिक[2] श्चित्रकृ[3]च्चा ऽथ तूलिका[1] ॥५८५॥
कूर्चिका[2], चित्र[1] मालेख्यं[2], पलगण्ड[1] स्तु लेप्यकृत्[2] ।
पुस्तं[1] लेप्यादिकर्म्म स्या न्नापित[1] श्चण्डिलः[2] क्षुरी[3] ॥५८६॥

---

(१) पट् चर्म्मपादुकामात्रे । "मोजा" "बुट्" इति इदानीं प्रसिद्धायां पादुकायामेकम् ॥

(२) त्वष्टारौ त्वष्टारः, काष्ठतक्षौ काष्ठतक्षः, तक्षा तक्षाणौ तक्षाणः, वर्द्धकिः वर्द्धकी वर्द्धकयः ॥

(३) अथवा: नागवल्लीपत्रच्छेदक अस्त्र इत्येके ॥

क्षुरमर्दी[4] दिवाकीर्त्ति[5] र्मुण्डको[6] ऽन्तावसाय्य[7]पि ।
मुण्डनं[1] भद्राकरणं[2] वपनं[3] परिवापणम्(१) ॥५८७॥
चौरं[4] नाराची[1] त्वेषणिका[2], देवाजीव[1]स्तु देवलः[2] ।
मार्दङ्गिको[1] मौरजिको[2], वीणावाद[1]स्तु वैणिकः[2] ॥५८८॥
वेणुध्मः[1] स्या द्वैणविकः[2], पाणिघः[1] पाणिवादकः[2] ।
स्या त्प्रातिहारिको[1] मायाकारो[2], माया[1] तु शाम्बरी[2] ॥५८९॥
इन्द्रजालं[1] तु कुहकं[2] जालं[3] कुसृति[4] रित्यपि ।
कौतूहलं[1] तु कुतकं[2] कौतुकं[3] च कुतूहलम्[4] ॥५९०॥
व्याधो[1] मृगवधाजीवी[2] लुब्धको[3] मृगयु[4] श्च सः ।
पापर्द्धि[1] र्मृगया[2] खेटो[3] मृगव्या[4]-छोदने[5] अपि ॥५९१॥
जालिक[1] स्तु वागुरिको[2], वागुरा[1] मृगजालिका[2] ।
(२)शुम्बं[1] वटारको[2] रज्जुः[3] शुल्वं[4] तन्त्री[5] वटी[6] गुणः[7] ॥५९२॥
धीवरो[1] दाश[2] कैवर्त्तौ[3](३), वडिशं[1] मत्स्यवेधनम्[2] ।
आनाय[1]स्तु मत्स्यजालं[2] कुवेणी[1] मत्स्यबन्धनी[1] ॥५९३॥
जीवान्तकः[1] शाकुनिको[2], वैतंसिक[1](४)स्तु सौनिकः[2] ।
मांसिकः[3] कौटिक[4]श्चाथ सूना[1] स्थानं वधस्य यत् ॥५९४॥
स्या द्बन्धनोपकरणं वीतंसो[1] मृगपक्षिणाम् ।

---

(१) परिवापनम् इत्यपि ॥ (५८९) "शाम्बरी" इत्यपि ॥

(२) शुनति शुम्बं स्त्री क्लीबलिङ्गः, शुम्बं शुम्बादय इति निपात्यते, वध्यते वटारः द्वारटङ्कारेत्यादेर्निपाते कौ वटारकः ॥

(३) दन्त्यशान् दाशशब्दः सेवकार्थः ॥

(४) वीतंसेन पक्ष्यादिघातकेन जीवति ॥

पाश[१] स्तु बन्धनग्रन्थि[२] रवपाता[१]-वटौ[२] समौ ॥५९५॥

उन्माथः[१] कूटयन्त्रं[२] स्यात् विवर्ण[१] स्तु पृथग्जनः[२] ।

इतरः[३] प्राकृतो[४] नीचः[५] पामरो[६] बर्व्वर[७] श्च सः ॥५९६॥

चण्डालो[१] ऽन्तावसा[२]य्यन्तेवासि[३]-श्वपच[४]-बुक्कसाः[५] ।

निषाद[६]-प्लव[७]-मातङ्ग[८]-दिवाकीर्त्ति[९]-जनङ्गमाः[१०] ॥५९७॥

पुलिन्दा[१] नाहला[२] निष्ट्याः[३] शबरा[४] वरुटा[५] भटाः[६] ।

माला[७] भिल्लाः[८] किराता[९]श्च सर्व्वेऽपि म्लेच्छजातयः ॥५९८॥

इत्याचार्य्य श्रीहेमचन्द्रविरचितायामभिधानचिन्तामणौ

नाम मालायां मर्त्यकाण्डस्तृतीयः समाप्तः ॥३॥



# भूमिकाण्डः ।



भू[1]र्भूमि[2]: पृथिवी[3] पृथ्वी[4] वसुधो[5]र्व्वी[6] वसुन्धरा[7] ।
धात्री[8] धरित्री[9] धरणी[10] विश्वा[11] विश्वम्भरा[12] धरा[13] ॥१॥
क्षिति[14]: क्षौणी[15] क्षमा[16]ऽनन्ता[17] ज्या[18] कु[19]र्वसुमती[20] मही[21] ।
गौ[22]र्गोत्रा[23] भूतधात्री[24] क्ष्मा[25] गन्धमाता[26]ऽचला[27]ऽवनि:[28] ।
सर्वंसहा[29] रत्नगर्भा[30] जगती[31] मेदिनी[32] रसा[33] ।
काश्यपी[34] पर्व्वताधारा[35] स्थिरे[36]ला[37] रत्न[38]-बीज[39]सू:(1) ॥३॥
विपुला[40] सागरा त्ता ग्रे स्यु र्नेमी[41]-मेखला[42]-म्बरा[43](2) ।
द्यावापृथिव्यौ[1] तु द्यावाभूमी[2] द्यावाक्षमे[3] अपि ॥४॥
दिवस्पृथिव्यौ[4] रोदस्यौ[5](3) रोदसी[6] रोदसी[7] च ते ।
उर्व्वरा[1] सर्व्वसस्याभूरि रिणं[1] पुन रूषरम्[2] ॥५॥
स्थलं[1] स्थली[2] मरु[1] र्धन्वा[2](4) क्षेत्राद्य प्रहतं खिलम्[1] ।
मृत्[1] मृत्तिका[2] सा क्षारो षो[1] मृत्सा[1] मृत्स्ना[2] च सा शुभा ॥६॥
(5)रुमा[1] लवणखानिः स्यात् सामुद्रं[1] लवणं[2] हि यत् ।

---

(१) रत्नसौ रत्नसः, रत्नसूः १ बीजसूः २ ॥

(२) सागरनेमी सागरमेखला सागराम्बराः ॥

(३) रोदस्यौ स्त्रीलिङ्गोयं द्विवचनान्तः सान्तः, इकारान्त "रोदसी रोदसी च ते" इति द्वावपि द्विवचनान्तौ क्लीब स्त्रीलिङ्गौ सान्तः अकारान्तोऽपि ॥ (४) धन्वानौ धन्वानः ॥

(५) रुमाणौ रुमाणः । अथवा रुमास्त्री आकारान्तः ॥

त द्रावं[२] वशिरञ्च[४] सैन्धवं[१] तु नदीभवम्[२] ॥७॥
माणिमन्थं[३] शीतशिवं[४] रौमकं[१] तु रुमाभवम्[२] ।
वसुकं[३] वसूकं[४] तच्च विड्[१]-पाक्ये[२] तु कृत्रिमे[३] ॥८॥
सौवर्च्चलेऽक्षकं[२] रुचकं[३] दुर्गन्धं[४] शूलनाशनम्[५] ।
कृष्णे तु तत्र तिलकं[१] यवक्षारो[१] यवाग्रजः[२] ॥९॥
यवनालजः[३] पाक्य[४] श्च पाचनक[१] स्तु टङ्कणः[२] ।
मालतीतीरजो[३] लोहश्लेष्मघ्नो[४](१) रसशोधनः[५] ॥१०॥
समा स्तु सर्ज्जिकाक्षार[१] कापोत[२]-सुखवर्च्चकाः[३] ।
सर्जी[१] स्तु सर्जिका[२] स्तुग्घ्नी[३] योगवाही[४] सुवर्च्चिका[५] ॥११॥
भरतान्यै[१] रावतानि[२] विदेहा[३] श्च कुरून् विना ।
वर्षाणि कर्म्मभूम्यः[१] स्युः शेषाणि फलभूमयः[१] ॥१२॥
वर्षं[१] वर्षधराङ्कं[२] विषय[१] स्तूपवर्त्तनम्[२] ।
देशो[३] जनपदो[४] नीवृत्[५](२) राष्ट्रं[६] निर्ग[७] श्च मण्डलम्[८] ॥१३॥
आर्य्यावर्त्तो[१] जन्मभूमि र्जिनचक्रय-र्द्धचक्रिणाम् ।
पुण्यभू[२] श्चारवेदी[३] मध्यं विन्ध्यहिमागयोः ॥१४॥
गङ्गायमुनयो र्मध्य मन्तर्व्वेदिः[१] समस्थली[२] ।
ब्रह्मावर्त्तः[१] सरस्वत्या दृषद्वत्या श्च मध्यतः ॥१५॥
ब्रह्मवेदिः[१] कुरुक्षेत्रे पञ्चरामह्रदान्तरम् ।
धर्मक्षेत्रं[१] कुरुक्षेत्रं[२] द्वादशयोजनावधि ॥१६॥
हिमवद्विन्ध्ययो र्मध्यं यत् प्राग्विनशना दपि ।

---

(१) लोहं श्लेष्मादि, श्लिष्यतेऽनेन लोहश्लेष्मघ्नः ॥

(२) नीवृत स्त्री, नीवृतौ नीवृतः। ४

प्रत्यगेव प्रयागाच्च मध्यदेशः[1] स मध्यमः[2] ॥१७॥
देशः प्राग्दक्षिणः प्राच्यो[1] नदीं यावच्छरावतीम् ।
पश्चिमोत्तरस्तूदीच्यः[1]प्रत्यन्तो[1] म्लेच्छमण्डलः ॥१८॥
पाण्डू-दक्-कृष्ण-तो भूमः[2]पाण्डू-दक्-कृष्ण-मृत्तिके[(1)] ।
जङ्गलो[1] निर्जलो[1]ऽनूपो[1]ऽम्बुमान् कच्छ[1]स्तु तद्विधः ॥१९॥
कुमुद्वान् कुमुदावासो वेतस्वान्[1] भूरिवेतसः ।
नड्प्रायो[1]नड्कीयो[2] नड्वां[3] श्च नड्वल[4] श्च सः ॥२०॥
शाड्वलः[1] शादहरिते देशो नद्यम्बुजीवनः ।
स्यान्नदीमातृको[1]देवमातृको[1]वृष्टिजीवनः ॥२१॥
प्राग्ज्योतिषाः[1]कामरूपा[2]मालवाः[1]स्यु रवन्तयः[2] ।
त्रैपुरा[1]स्तु डाहलाः[2]स्यु श्चैद्या[1]स्ते चेदय[4] श्च ते ॥२२॥
वङ्गा[1] स्तु हरिकेलीया[2] अङ्गा[1] श्चम्पोपलक्षिताः ।
साल्वा[1]स्तु कारकुक्षीया[2] मरव[1]स्तु दशेरकाः[2] ॥२३॥
जालन्धरा[1] स्त्रिगर्त्ताः[2]स्यु स्तायिकाः[1] स्तर्जिकाभिधाः ।
कश्मीरा[1]स्तु माधुमता[2] सारस्वता[3] विकर्णिकाः[4] ॥२४॥
बांह्लिका[1]ष्टक्क[2]-नामानो बाह्लीका[1] वाह्लिका[2]-ह्वयाः ।
तुरुष्का[1]स्तु साखयः[2]स्युः कारूषा[1]स्तु बृहद्गृहाः[2] ॥२५॥
लम्पाका[1]स्तु मुरण्डाः[2]स्युः सौवीरा[1]स्तु कुमालकाः[2] ।
प्रत्यग्रथा[1]स्त्व हिच्छत्राः[2]कीकटा[1] मगधा[2]-ह्वयाः ॥२७॥
[(2)]उण्ड्राः[1]केरल[2]-पर्य्यायाः कुन्तला[1] उपहालकाः[2] ।

---

(१) पाण्डुभूमः १ उदग्भूमः २ कृष्णभूमः ३ तद्विधोऽनूपप्रायः ॥
(२) उत्कल इति प्रसिद्धायाम् ॥ (२१) "शाद्वल" इत्यपि ॥

ग्रामोऽस्तु वसथः[२] सं-नि-प्रति-पर्य्युप-तः परः[(१)] ॥२७॥
पाटक[१]स्तु तदर्द्धे स्या दाघाट[१]स्तु घटो[२]ऽवधिः[३] ।
अन्तो[४]ऽवसानं[५] सीमा[६]च मर्य्यादा[७]ऽपि च सीमनि[८] ॥२८॥
ग्रामसीमा तूपशल्यं[१] मालं[१] ग्रामान्तराटवी ।
पर्य्यन्तभूः परिसरः स्यात् कर्मान्त[१]स्तु कर्म्मभूः ॥२९॥
गोस्थानं[१] गोष्ठ[२]मेतत्तु गौष्ठीनं[१] भूतपूर्व्वकम् ।
तदाश्रितं गवीनं[१] स्या द्गावो यत्राश्रिताः पुरा ॥३०॥
क्षेत्रे तु वप्रः[२] केदारः[३] सेतौ[१] पाल्या[२]-लि[३]-संवराः[४] ।
क्षेत्रं तु शाकस्य शाकशाकटं[१] शाकशाकिनम्[२] ॥३१॥
व्रैहेयं[१] शालेयं[१] षष्टिक्यं[१] कौद्रवीण[१]-मौद्गीने[१] ।
व्रीह्यादीनां क्षेत्रेऽणव्यं[१]तु स्यादाणवीन[२]मणोः ॥३२॥
भङ्ग्यं[१] भाङ्गीन[२] औमीन[१] मुम्यं[२] यव्यं[१] यवक्य[२]-वत् ।
तिल्यं[१] तैलीनं[२] माषीणं[१] माष्यं[२] भङ्गादिसम्भवम् ॥३३॥
शीत्यं[१] हल्यं[२] त्रिहल्यं[१] तु त्रिसीत्यं[२] त्रिगुणाकृतम्[३] ।
तृतीयाकृतं[४] द्विहल्या[५]-द्येवं शम्बाकृतं[६] च तत् ॥३४॥
बीजाकृतं[१] तूप्तकृष्टं[२] द्रौणिका[१]-ढकिका[१]-दयः[(२)] ।
स्यु द्रौणा-ढक-वापादौ[(३)] खलधानं[१] पुनः खलम्[१][(४)] ॥३५॥

---

(१) संवसथः १ निवसथः २ प्रतिवसथः ३ परिवसथः ४ उपवसथः ५॥ (२) आदिना खारीकादयो गृह्यन्ते ॥

(३) उप्यतेऽस्मिन्निति वापः क्षेत्रं द्रोणाढकयोर्वापः द्रोणाढकवापः स आदिर्यस्य स तथा आदिशब्दात् द्रोणं पचति सम्भवत्यवहरति वा द्रौणिकः कटाहः द्रौणिकी स्थाली एवम् आढकिकः कटाहः आढकिकी स्थाली इत्याद्याः ॥ (४) खलं त्रिषु ॥

चूर्णे[1] क्षोदो[2] ऽथ रजसि[1](1) स्युर्धूली[2]-पांशु[3]-(2) रेणवः[4]।
लोष्टे[1] लोष्टु[2] दलि[3] र्लेष्टु[4] र्वल्मीकः[1] कृमिपर्वतः[2] ॥३६॥
वम्रीकूटं[3](3) वामलूरो[4] नाकुः[5] शक्रशिर[6] श्च सः।
नगरी[1] पूः[2] पुरी[3] द्रङ्गः[4] पत्तनं[5] पुटभेदनम्[6] ॥३७॥
निवेशन[7] मधिष्ठानं[8] स्थानीयं[9] निगमो[10] ऽपि च।
शाखापुरं[1] तूपपुरं[2] खेटः[1] पुरार्द्धविस्तरः ॥३८॥
स्कन्धावारो[1] राजधानी[2] कोट्ट[1]-दुर्गे[2] पुनः समे।
गया[1]-पूर्गयराजर्षेः कन्यकुब्जं[1] महोदयम्[2] ॥३९॥
कन्याकुब्जं[3] गाधिपुरं[4] कौशं[5] कुशस्थलं[6] च तत्।
काशि[1] र्वाराणसी[2] वाराणसी[3] शिवपुरी[4] च सा ॥४०॥
साकेतं[1] कोशला[2] ऽयोध्या[3] विदेहा[1]-मिथिले[2] समे।
त्रिपुरी[1] चेदिनगरी[2] कौशाम्बी[1] वत्सपत्तनम्[2] ॥४१॥
(4)उज्जयिनी[1] स्याद्विशाला[2] ऽवन्ती[3] पुष्पकरण्डिनी[4]।
पाटलिपुत्रं[1] कुसुमपुरं[2] चम्पा[1] तु मालिनी[2] ॥४२॥
(5)लोमपादकर्णयोः पू[4] र्देवीकोट[1] उमावनम्[2]।

---

(1) अकारान्तोऽपि रजः॥

(2) पांशुः दन्त्य-पञ्चमस्वरान्तः तालव्यान्तोऽपि॥

(3) कूटं पुंक्लो॰॥

(4) उत्कर्षेण जयत्युज्जयनी रम्यादित्वादनट्, अन्ये तु उज्जयिनी-नाम राक्षसी देवता तस्या निवास उज्जयिनीति चातुरर्थिकमण-मुत्पाद्य तस्य लोपमिच्छन्ति॥

(5) लोमपादः १ कर्णः २॥

कोटीवर्षं बाणपुरं[4] स्याच्छोणितपुरं[5] च तत् ॥४३॥
मथुरा[1] तु मधूपघ्नं[2] मधुरा[3]ऽथ गजाह्वयम्[1] ।
स्याद्धास्तिनपुरं[2] हस्तिनीपुरं[3] हस्तिनापुरम्[4] ॥४४॥
(१) तामलिप्तं[1] दामलिप्तं[2] तामलिप्ती[3] तमालिनी[4] ।
स्तम्बपू[5] र्विष्णुगृहं[6] च स्याद्विदर्भा[1] तु कुण्डिनम्[2] ॥४५॥
द्वारावती[1] द्वारका[2] स्यात् निषधा[1] तु नलस्य पूः ।
प्राकारो[1] वरणः[2] सालः[3] चयो[1] वप्रो[2]ऽस्य पीठभूः ॥४६॥
प्राकाराग्रं[1] कपिशीर्षं[2] चौमा[1]-ट्टा[2]-ट्टालकाः[3] समाः ।
पूर्द्वारे[1] गोपुरं[2] रथ्या[1] प्रतोली[2] विशिखाः[3] समाः ॥४७॥
परिकूटं[1] हस्तिनखो[2] नगरद्वारकूटके ।
मुखं[1] निःसरणं[2] वाटी[1] प्राचीना[2]-वेष्टकौ[3] वृतिः[4] ॥४८॥
पदव्ये[1]कपदी[2] पद्या[3] पद्धति[4] र्वर्त्म[5] वर्त्तनी[6] ।
अयनं[7] सरणि[8] र्मार्गो[9]ऽध्वा[10] पन्था[11] निगमः[12] सृतिः[13] ॥४९॥
सत्पथे[1] सु-ति-तः पन्था[2] (२) अपन्था[1] अपथं[2] समे(३) ।
व्यध्वो[1] दुरध्वः[2] कदध्वा[3] विपथ[4] कापथं[5] च सः ॥५०॥
प्रान्तरं[1] दूरशून्यो ऽध्वा कान्तारो[1] वर्त्म दुर्गमम् ।
(१) सुरङ्गा[1] तु सन्धिला[2] स्यात् गूढमार्गो(२) भुवोऽन्तरे ॥५१॥

---

(१) ताम्रलिप्तमिति वा ॥

(२) सुपन्था १ अतिपन्थाः २ । सुपन्थानौ सुपन्थानः, अति-पन्थानौ अतिपन्थानः, द्वौ नान्तौ पुं ॥ (३) अपथे अपथानि, अकारान्तः क्ली ॥ (१) सरत्यनया सुरङ्गा सर्त्तेः सर्वेत्युङ्गः ॥

(२) गूढवर्त्मनि भूमध्ये उकाराद्या दन्त्य तालव्य पूर्वेगा सुरङ्गा इति शब्दरत्नाकर शब्दभेदः ४

चतुष्पथे[1] तु संस्थानं[2] चतुष्कं[3] त्रिपथे[1] त्रिकम्[2] ।
द्विपथं[1] तु चारपथो[2] गजाद्यध्वा त्व सङ्कुलः ॥५१॥
घण्टापथः[1] संसरणं[2] श्रीपथो[3] राजवर्त्म[4] च ।
उपनिःक्रमणं[5] द्वोपनिष्कारं[6] च महापथः[7] ॥५२॥
विपणि[1]स्तु वणिङ्मार्गः[2] स्थानं[1] तु पदं[2] मास्पदम्[3] ।
स्लेष स्त्रिमार्ग्याः शृङ्गाटं[1] बहुमार्गी तु चत्वरम् ॥५३॥
श्मशानं[1] करवीरं[2] स्यात्[2](१) पितृ-प्रेत।[4] वनं[5] गृहम्[6] ।
गेहभू[1]र्वास्तु गेहं[1] तु गृहं[2] वेश्म[3] निकेतनम्[4] ॥५५॥
मन्दिरं[5] सदनं[6] सद्म[7] निकाय्यो[8] भवनं[9] कुटः[10] ।
आलयो[11] निलयः[12] शाला[13] सभो[14] दवसितं[15] कुलम्[16] ॥५६॥
धिष्ण्य[17] मावसथः[18] स्थानं[19] पस्त्यं[20] संस्त्याय[21] आश्रयः[22] ।
(२) ओको[23] निवास[24] आवासो[25] वसतिः[26] शरणं[27] क्षयः[28] ॥५
धामा[29] गारं[30] निशान्तं[31] च कुट्टिमं[1] त्वस्य बद्धभूः ।
चतुःशालं[1] सञ्जवनं[2] सौधं[1] तु (३) नृपमन्दिरम् ॥५८॥
उपकारिको[1] पकार्य्या[2] सिंहद्वारं[1] प्रवेशनम्[2] ।
प्रासादो[1] देवभूपानां हर्म्यं[1] तु धनिनां गृहम् ॥५९॥
मठा[1]-वसथ्या[2]-वसथाः[3] स्यु छात्र-व्रति-वेश्मनि ।
पर्णशालो[1] टजं[2] चैत्य[1]-विहारौ[2] जिनसद्मनि[2] ॥६०॥

---

(३) 'करवीरः पुं स्त्री, पितृवनं १ पितृगृहं २ प्रेतवनं १ प्रेत गृहम् ४ ॥

(४) ओकसी ओकांसि ॥

(१) पटमण्डपादि राजसपटस्य ॥

गर्भागारे[१] ऽपवरको[२] वासौकः[३] शयनास्पदम्[४] ।
भाण्डागारं[१] तु कोशः[२] स्यात् चन्द्रशाला[१] शिरोगृहम्[२] ॥६१॥
कुप्यशाला[१] तु सन्धानी[२] कायमानं[१] तृणौकसि[२] ।
होत्रीया[१]स्तु हविर्गेहं[२] प्राग्वंशः[१] प्राग् हविर्गृहात्[२] ॥६२॥
आथर्वणं[१] शान्तिगृहं[२] मास्यानगृहं[१] मिन्दकम्[२](१) ।
तैलिशाला[१] यन्त्रगृहं[२] मरिष्टं[१] सूतिकागृहम्[२] ॥६३॥
सूदशाला[१] रसवती[२] पाकस्थानं[३] महानसम्[४] ।
हस्तिशाला[१] तु चतुरं[२] वाजिशाला[१] तु मन्दुरा[२] ॥६४॥
सन्दानिनी[१] तु गोशाला[२] चित्रशाला[१] तु जालिनी[२] ।
कुम्भशाला[१] पाकपुटी[२] तन्तुशाला[१] तु गर्त्तिका[२] ॥६५॥
नापितशाला[१] वपनी[२] शिल्पा[३](२) खरकुटी[४] च सा ।
आवेशनं[१] शिल्पिशाला[२] सत्रशाला[१] प्रतिश्रयः[२] ॥६६॥
आश्रम[१]स्तु मुनिस्थान मुपघ्न[१]स्त्व न्तिकाश्रयः[२] ।
प्रपा[१] पानीयशाला[२] स्यात् गञ्जा[१] तु मदिरागृहम्[२] ॥६७॥
पक्कणः[१](३) शबरावासो[२] घोष[१]स्त्वा भीरपल्लिका[२](४) ।
पण्यशाला[१] निषद्या[२] ऽट्टो[३] हट्टो[४] विपणि[५] रापणः[६] ॥६८॥
वेश्याश्रयः[१] पुरं[२] वेशो[३] मण्डप[१]स्तु जनाश्रयः[२] ।
कुड्यं[१] भित्ति[२]-स्त देडूक[१] मन्तर्निहितकीकसम् ॥६९॥

(१) अभागृहस्य ॥

(२) शिल्प्या इति वा पाठः ॥

(३) पक्कणः द्विककारमध्योऽयम् ॥

(४) आभीराणां गोपानां पल्लिर्गृहावली आभीरपल्लिका ॥

वेदी[1] वितर्द्दि[2] रजिरं[1] प्राङ्गणं[2] चत्वरा[3]-ङ्गणे[4] ।
बलजं[1] प्रतीहारो[2] द्वा[3] द्वारि[4](1) ऽथ परिघो[1] ऽर्गला[2] ॥७०॥
साल्या त्व र्गलिका[1] सूचिः कुञ्चिकायां[1] तु कूचिका[2] ।
साधारण्यं[2] ...ट[4] वा सौ द्वारयन्त्रं[1] तु तालकम्[2] ॥७१॥
अस्यो द्धाटनयन्त्र तु ताल्य[1] पि प्रतिताल्य[2] पि ।
तिर्य्यग् द्वारोर्द्धदारू त्तरङ्गं[1] स्या दररं[1] पुनः ॥७२॥
कपाटो[2] ररिः[3] कुवाटः[4] पक्षद्वारं[1] तु पक्षकः[2] ।
प्रच्छन्न[1] मन्तर्द्वारं[2] स्याद् बहिर्द्वारं[1] तु तोरणम्[2] ॥७३॥
तोरणोर्द्धे तु मङ्गल्यं दाम वन्दनमालिका[1] ।
स्तम्भादेः स्या दधोदारौ शिला[1] नासो र्द्धदारुणि ॥७४॥
गोपानसी[1] तु वलभीच्छादने वक्रदारुणि ।
गृहावग्रहणी[1] देहल्यु[2]-म्बरो[3] डुम्बरो[4]-म्बुराः[4] ॥७५॥
प्रघाणः[1] प्रघणो[2](2) ऽलिन्दो[3] बहिर्द्वारप्रकोष्ठके ।
कपोतपाली[1] विटङ्कः[2](3) पटल[1]-च्छदिषी[2] समे(4) ॥७६॥

---

(१) द्वारौ द्वारः, रान्तः । द्वारमकारान्तः तोरणोऽस्त्री बहिर्द्वारमित्यमरः ॥

(२) "वेश्मैकदेशः प्रघणः प्रघाणः स्यादलिन्दकः" इति हलायुधः । "शुभ्राङ्ग नीलोत्पलनिर्म्मितानां लिप्तेषु भासा गृहदेहलीनां यस्यामलिन्देषु न चक्रुरेव मुग्धाङ्गना गोमय गोमुखानि ॥"

(३) "विटङ्कं पुन्नपुंसक" मित्यमरः वलभ्यधोभागे कृत्रिमपक्षिस्थानमिति हलायुध टीका ॥

(४) छदि छदिषी छदींषि ॥

नीव्रं[1] वलीकं[2] तत्प्रान्त इन्द्रकोशः[1] समञ्जकः[2]।
वलभी[1] छदि(1) राधारो नागदन्ता[1]स्तु दन्तकाः[2](2) ॥७७॥
(3)मत्तालम्बो[1] ऽपाश्रयः[2] स्यात् प्रग्रीवो[3] मत्तवारणः[4]।
वातायनो[1] गवाक्ष[2]श्च जालके[3] ऽथान्नकोष्ठकः[1] ॥७८॥
कुसूलो[2] ऽस्रि[1]स्तु कोणो[2] ऽश्रिः[3] कोटिः[4] पाल्य[5]स्र[6] इत्यपि।
आरोहणं[1] तु सोपानं[2] निःश्रेणि[1]स्त्वधिरोहिणी[2] ॥७९॥
स्थूणा[1] स्तम्भः[2] शालभञ्जी[1] पाञ्चालिका[2] च पुत्रिका[3]।
काष्ठादिघटिता लेप्यमयी त्वञ्जलिकारिका[1] ॥८०॥
नन्द्यावर्त्त[1]प्रभृतयो विच्छन्दा आढ्यवेश्मनाम्(4)।
समुद्गः[1] सम्पुटः[2] पेटा[1] स्यान्मञ्जूषा[2] ऽथ शोधनी[1] ॥८१॥
सम्मार्जनी[2] बहुकरी[3] वर्द्धनी[4] च समूहनी[5]।

---

(1) छदिषो गृहाच्छादनस्याधारः छदिराधारः क्वचित् सुधा क्वचित् तृणानि क्वचित् मृत्तिका तदाधारभूतं वंशपञ्जरादिः "आच्छादनं स्याद्वलभी गृहाणा"मिति हलायुधः, वरण्डिकायां गृहोपरिस्थितभूमिकायां वा वलभीति तट्टीका। वलभिः गृहोपरि कुटिः पटलाधारश्च वंशपञ्जर इति लिङ्गानुशासन टीका "तां कस्यां चिद्भवन वलभौ सुप्तपारावतायां"मिति मेघदूतः, भवनानां वेश्मनां वलभिरुपरिस्थित न भूमि स्तस्यामिति तट्टीका॥

(2) गृहान्निर्गतकाष्ठं खूंटीति ख्यातम्॥

(3) प्रासादवीथीनामावरणस्य॥

(4) आढ्यवेश्मनां नन्द्यावर्त्तप्रभृतयो विच्छन्दा रचनाविशेषाः प्रभृति ग्रहणात् स्वस्तिक सर्व्वतोभद्राद्या। तथा च शब्दरत्नावल्यां "नन्द्यावर्त्तः स्वस्तिकः स्यात् सर्व्वं चित्रविचित्रकौ। विच्छन्दको वर्द्धमान सर्वतोभद्रमण्डल इत्यपि। रुचकच्छन्दकाद्याश्च भेदा ईश्वरसद्मनाम्" इति॥

(१)सङ्करा[१]-वकरौ[२] तुल्या[१]वुदूखल[१]मुलूखलम्[२] ॥८२॥
(२)प्रस्फोटनं[१] तु पवन[१]मवघात[१]स्तु कण्डनम्[२]।
कटः[१] किलिञ्जो[२] मुसलो[१]ऽयोग्रं[२] कण्डोलकः[१]पिटम्[२] ॥८३॥
चालनी[१] तितउः[२](३) शूर्पं[१] प्रस्फोटन[२]मथान्तिका[१]।
चुल्ल्य[२]श्मन्तक[३]मुद्धान[४] स्याद्धिश्रयणी[५] च सा ॥८४॥
स्थाल्यु[१]खा[२] पिठरं[३] कुण्डं[४] चरुः[५] कुम्भी[६] घटः[१] पुनः।
कुटः[२] कुम्भः[३] करीर[४]श्च कलशः[५] कलसो[६] निपः[७] ॥८५॥
हसन्य[१](४)ङ्गारशकटी[२]-धानी[३]-पात्री[४] हसन्तिका[५]।
भ्राष्ट्रो[१]ऽम्बरीष[२]मृचीष[१]मृजीषं[२] पिष्टपाकभृत् ॥८६॥
कम्बि[१]र्दर्विः[२] खजाका[३]ऽथ स्यात्तर्दू[१]र्दारुहस्तकः[२]।
वार्धान्यां[१]तु गलन्त्या[२]लूः[३]कर्करी[४]करको[५]ऽथ सः(५) ॥८७॥
नालिकेरजः करङ्क[१]स्तुल्यौ कटाह[१]-कर्परौ[२](६)।
मणिको[१]ऽलिञ्जरो[२] गर्गरी[१]-कलश्यौ[२] तु मन्थनी[३](७) ॥८८॥
वैशाखः[१] खजको[२] मन्था[३] मन्थानो[४](८) मन्थदण्डकः[५]।
मन्थः[६] क्षुब्धो[७]ऽस्य विष्कम्भो[१]मञ्जीर[२]कुटरो[३]ऽपि च ॥८९॥

---

(१) अवस्करोऽपि ॥
(२) निर्बुसीकरणं, तुषादिशोधनम् ॥
(३) तितउ तितउनी तितउनि इति क्लीबेऽपि ॥
(४) अङ्गारशकटी १ अङ्गारधानी २ अङ्गारपात्री ३ ॥
(५) करकोऽथसः इति वा ॥
(६) एतौ कटाह कर्परौ घटादिखण्डेऽपि वर्त्तेते ॥
(७) मन्थिनी इति वा ॥
(८) मन्थानौ मथ्यानः ॥

शालाजिरो[१] वर्द्धमानः[२] शरावः[३] कोशिका[१(१)] पुनः ।
मल्लिका[१] चषकः[२] कंसः[३] पारी[४] स्यात् पानभाजनम्[१] ॥८०॥
कुतू[१] चर्म्मस्नेहपात्रं कुतुप[१] स्तु तदल्पकम् ।
दृतिः[१] खल्ला[२] चर्म्ममयी त्वालुः करकपात्रिका[१] ॥८१॥
सर्व्वं मावपनं[१] भाण्डं[२] पात्रा[१]-ऽमत्रे[२] तु भाजनम्[१] ।
तद्विशालं[१] पुनः स्थालं स्यात् पिधान[१] मुदञ्चनम्[२] ॥८२॥
शैलो[१] ऽद्रिः[२] शिखरी[३] शिलोच्चय[४]-गिरी[५] गोत्रो[६] ऽचलः[७]
सानुमान्[८], ग्रावा[९(२)] पर्व्वत[१०]-भूध्र[११]-भूधर[१२]-धरा[१३]हार्य्या[१४]
नगो[१५] ऽथो दयः[१] ।
पूर्व्वाद्रि[२] श्चरमाद्रि[१] रस्त[२] उदगद्रि[१] स्त्वद्रिराण्[२] मेनकाप्राणेशो[३]
हिमवान्[४] हिमालय[५]-हिमप्रस्थौ[६] भवानीगुरुः[७] ॥८३॥
हिरण्यनाभो[१] मैनाकः[२] सुनाभ[३] श्च तदात्मजः ।
रजताद्रि[१] स्तु कैलासो[२] ऽष्टापदः[३] स्फटिकाचलः[४] ॥८४॥
क्रौञ्चः[१] क्रुञ्चो[२] ऽथ मलय[१] आषाढो[२] दक्षिणाचलः[३] ॥
स्यान्माल्यवान्[२(३)] प्रस्रवणो[२] विन्ध्य[१] स्तु जलवालकः[२] ॥८५॥
शत्रुञ्जयो[१] विमलाद्रि[२] रिन्द्रकील[१] स्तु मन्दरः[२]
सुवेलः[१] स्यात् त्रिमुकुट[२] स्त्रिकूट[३] स्त्रिककु[४] च्च सः ॥८६॥
उज्जयन्तो[१] रैवतकः[२] सुदारुः[१] पारियात्रिकः[२] ।
लोकालोक[१] श्चक्रवालो[२] ऽथ मेरुः[१] कर्णिकाचलः[२] ॥८७॥

---

(१) कौशिका इति भावः ॥
(२) सानुमन्तौ सानुमन्तः, ग्रावाणौ ग्रावाणः ॥
(३) माल्यवन्तौ माल्यवन्तः ॥

रत्नसानुः[३] सुमेरु[४] स्स्व-स्वर्गिरि[५]-काञ्चनतो[६] गिरिः[७](१)।
शृङ्गं[१] तु शिखरं[२] कूटं[३] प्रपात[१]स्तु तटो[२] भृगुः[३] ॥९८॥
मेखला[१] मध्यभागोऽद्रेर्नितम्बः[२] कटक[३]श्च सः ।
दरी[१] स्यात् कन्दरो[२]ऽखातबिले तु गह्वरं[१] गुहा[२] ॥९९॥
द्रोणी[१] तु शैलयोः सन्धिः पादाः[१] पर्य्यन्तपर्व्वताः ।
दन्तका[१]स्तु बहिस्तिर्य्यक् प्रदेशा निर्गता गिरेः ॥१००॥
अधित्यका[१] दूर्ध्वभूमिः स्यादधोभूमिरुपत्यका[१] ।
स्नुः[१] प्रस्थं[२] सानु[३]रश्मा[१] तु पाषाणः[२] प्रस्तरो[३] दृषद्[४](२) ॥१०१॥
ग्रावा[५]शिलो[६]पलो[७] गण्डशैलाः स्थूलोपला च्युताः ॥
स्यादाकरः[१] खनिः[२] खानि[३]र्गञ्जा[४] धातु[१]स्तु गैरिकम्[१] ॥१०२॥
शुक्लधातौ[१] पाकशुक्ला[२] कठिनी[३] खटिनी[४] खटी[५] ।
लोहं[१] कालायसं[२] शस्त्रं[३] पिण्डं[४] पारशवं[५] घनम्[६] ॥१०३॥
गिरिसारं[७] शिलासारं[८] तीक्ष्णं[९] कृष्णामिषो[१०]ऽयः[११] ।
सिंहान[१]-धूर्त्त[२]-मण्डूर[३]-सरणान्य[४]स्य किट्टके ॥१०४॥
सर्व्वं च तैजसं लोहं(३) विकारस्त्वयसः कुशी[१] ।
ताम्रं[१] म्लेच्छमुखं[२] शुल्बं[३] रक्तं[४] द्व्यष्टं[५] उदुम्बरम्[६] ॥१०५॥
(४)म्लेच्छ[७]-शबर[८]-भेदाख्यं मर्कटास्यं[९] कनीयसम्[१०] ।

---

(१) स्वर्गिरिः १ स्वर्गिगिरिः २ काञ्चनगिरिः ३ ॥

(२) दृषदौ दृषदः ॥

(३) सुवर्णं १ रजतं २ ताम्रं ३ रीतिः ४ कांस्यं ५ तथा त्रपु ६ । सीसं ७ च धीवरं ८ चैव ह्यष्टौ लोहानि चक्षते ॥

(४) शबरभेदाख्यम् इति वा ॥

ब्रह्मवर्द्धनं[११] वरिष्टं[१२] सीसं[१] तु सीसपत्रकम्[२] ॥१०६॥
नागं[३] गण्डूपदभवं[४] वप्रं[५] सिन्दूरकारणम्[६]।
(१)वर्ध्रं[७] स्वर्णारि[८]-योगेष्ट[९]-यवनेष्टं[१०] सुवर्णकम्[११] ॥१०७॥

वङ्गं[१] त्रपुः(२) स्वर्णज[३]-नागजीवने[४]
मृद्वङ्ग[५]-रङ्गे[६] गुरुपत्र[७]-पिच्चटे[८]।
स्याच्चक्रसंज्ञं[९] तमरं[१०] च नागजं[११]
कस्तीर[१२] मालीनक[१३]-सिंहले[१४] अपि ॥१०८॥

स्यात् रूप्यं[१] कलधौत[२]-तार[३]-रजत[४]-श्वेतानि[५] दुर्वर्णकं[६]
खर्जूरं[७] च हिमांशु[८]-हंस[९]-कुमुदा[१०]-भिख्यं[११] सुवर्णं[१] पुनः।
स्वर्णं[२] हेम[३](४) हिरण्य[४]-हाटक[५]-वसून्य[६]ष्टापदं[७] काञ्चनं[८]
कल्याणं[९] कनकं[१०] महारजत[११]-रै[१२]-गाङ्गेय[१३]-रुक्माण्य[१४]पि ॥१०९॥

कलधौत[१५]-लोहोत्तम[१६]-वह्निबीजा[१७]
न्यपि गारुडं[१८] गैरिक[१९]-जातरूपे[२०]।
तपनीय[२१]-चामीकर[२२]-चन्द्र[२३]-भर्मा[२४](५)-
ऽर्जुन[२५]-निष्क[२६]-कार्तस्वर[२७]-कर्बुराणि[२८] ॥११०॥

जाम्बूनदं[२९] शातकुम्भं[३०] रजतं[३१] भूरि[३२] भूत्तमम्[३३]।

---

(१) वर्ष इति वा ॥

(२) त्रपुषी त्रपूंषि, उकारान्तोऽपि त्रपु त्रपुणी त्रपूणि ॥

(३) हिमांशुहंसकुमुदानामभिख्यानामयस्य तत्तया चन्द्राह्वयं १ हंसाह्वयं २ कुमुदाह्वयं ३ इत्यादि योज्यम् ॥

(४) हेम हेम्नि हेमनि हेमानि नान्तः अकारान्तोऽपि कुलवत् ॥

(५) भर्म भर्मणी भर्माणि नान्तः अकारान्तोऽपि कुलवत् भर्मं भर्मे भर्माणि ॥

हिरण्य[१]-कोश[२]-कुप्यानि[३(१)] हेम्नि रूप्ये कृता-कृते ॥१११॥
कुप्यं तु तद्द्वयादन्यद् रूप्यं तु द्वय[(२)] माहतम्।
अलङ्कारसुवर्णं[१] तु[(३)] शृङ्गीकनक[२] मायुधम्[३] ॥११२॥
रजतं च सुवर्णं च संश्लिष्टे घनगोलकः[१]।
पित्तला[१] रे[२] ऽथारकूटः[१] कपिलोहं[२] सुवर्णकम्[३] ॥११३॥
रिरी[४] रीरी[५] च रीतिश्[६] च पीतलोहं[७] सुलोहकम्[८(४)]।
ब्राह्मी[१] तु राज्ञी[२] कपिला[३] ब्रह्मरीति[४] र्महेश्वरी[५(५)] ॥११४॥
कांस्ये[१] विद्युत्प्रियं[२] घोषः[३(६)] प्रकाशं[४] वङ्कशुल्वजम्[५]।
घण्टाशब्द[६] मसुराह्वं[७] रवणं[८] लोहजं[९] मलम्[१०] ॥११५॥
सौराष्ट्रके[१] पञ्चलोहं[२(७)] वर्त्तलोहं[१] तु वर्त्तकम्[२]।
पारदः[१] पारतः[२] सूतो[३] हरबीजं[४] रसः[५] चलम्[६] ॥११६॥
अभ्रकं[१] स्वच्छपत्रं[२] खं[(८)] मेघाख्यं[४] गिरिजामले[५]।

---

(१) सामान्येन द्रव्याभरणाद्युत्कृष्टधनस्य, घटिता घटित हेम रूप्ययोः कुप्यं रूप्यम् ॥

(२) द्वयं कुप्यमकुप्यं च आहतं ताडितं रूप्यं स्यात्। आहत रूप्योत्पन्नो लोके रुपैया इति ख्यातः। तथा पैसा इति चान्यः॥

(३) कुन्दन इति प्रसिद्धः॥

(४) पित्तलभेदस्य सुवर्णसदृशस्य॥

(५) पीतरक्त पित्तलस्य॥

(६) घोष इति वा, अति एव कांस्यम्॥

(७) पञ्च ताम्र रीति त्रपु सीसक कालायस लक्षणानि लोहानि अस्मिन्। कांस्यभेदः। भाङ्कारकांसा कांसी इति भाषा॥

(८) खस्याकाशस्याभिख्यास्य तेन खं गगनं इत्यादि तथा मेघाख्यं मेघः अभ्रम् इत्यादि गिरिजामले इति सप्तम्येकवचनान्तम्॥

स्रोतोऽञ्जनं[1] तु कापोतं[2] सौवीरं[3] कृष्ण[4]-यामुने[5] ॥११७॥
अथ तुत्थं[1] शिखिग्रीवं[2] तुत्थाञ्जन[3]-मयूरके[4] ।
मूषातुत्थं[1] कांस्यनीलं[2] हेमतारं[3] वितुन्नकम्[4] ॥११८॥
स्यात् तु कर्परिकातुत्थ[1] ममृतासङ्ग[2] मञ्जनम्[3] ।
रसगर्भं[1] तार्क्ष्यशैलं[2] तुल्ये दार्वीरसोद्भवे ॥११९॥
पुष्पाञ्जनं[1] रीतिपुष्पं[2] पौष्पकं[3] पुष्पकेतु[4] च(1) ।
माक्षिकं[1] तु कदम्बः[2] स्यात् चक्रनामा[3] ऽजनामकः[4] ॥१२०॥
ताप्यो[1] नदीजः[2] कामारि[3] स्तारारि[4]र्विटमाक्षिकः[5] ।
सौराष्ट्री[1] पार्वती[2] काक्षी[3] कालिका[4] पर्पटी[5] सती[6] ॥१२१॥
आढकी[7] तुवरी[8] कंसोद्भवा[9] काछी[10] मृदा[11]-ह्वया(2) ।
कासीसं[1] धातुकासीसं[2] खेचरं[3] धातुशेखरम्[4] ॥१२२॥
द्वितीयं पुष्पकासीसं[1] कंसकं[2] नयनौषधम्[3] ।
गन्धाश्मा शुल्व[2]-पामा[3]-कुष्ठा-रि[4](3) र्गन्धिक[5]गन्धकौ[6] ॥१२३॥
सौगन्धिकः[7] शुकपुच्छो[8]ऽथ हरितालं[1] तु पिञ्जरम्[2] ।
बिडालकं[3] विस्रगन्धि[4] खर्जूरं[5] वंशपत्रकम्[6] ॥१२४॥
आल[7]-पीतन[8]-तालानि[9] गोदन्तं[10] नटमण्डनम्[11] ।
वङ्गारि[12]र्लोमहृ[13]च्चाथ मनोगुप्ता[1] मनःशिला[2] ॥१२५॥
करवीरा[3] नागमाता[4] रोचनी[5] रसनेत्रिका[6] ।
नेपाली[7](4) कुनटी[8] गोला[9] मनोज्ञा[10] नागजिह्विका[11] ॥१२६॥

(१) पुष्पकं पुष्पकेतु इति नामद्वयमपि पदच्छेदभेदात् साधु ज्ञेयं ॥
(२) मृदः आह्वयो यस्याः तेन मृत्तिका मृत्सा मृत्स्ना इत्यादि ॥
(३) शुल्वारिः । पामारिः कुष्ठारिः ॥
(४) नैपाली . लि० १ ॥

सिन्दूरं¹ नागजं² नागरक्तं³ शृङ्गारभूषणम्⁴ ।
चीनपिष्टं¹ हंसपाद¹-कुरुविन्दे² तु हिङ्गुलः² ॥१२७॥
शिलाजतु¹ स्यादद्रिजं² मर्त्यं³ गैरेयं⁴ मश्मजम्⁵ ।
क्षारः¹ काचः² कुलाली¹ तु स्याच्चक्षुष्या² कुलत्थिका³ ॥१२८॥
बोलो¹ गन्धरसः² प्राणः³ पिण्डो⁴ गोपरसः⁵ शशः⁶ ।
रत्नं¹ वसु² मणिः³(१) स्यात् वैदूर्य्यं¹ बालवायजम्² ॥१२९॥
मरकतं¹ त्वश्मगर्भं² गारुत्मतं³ हरिन्मणिः⁴ ।
पद्मरागो¹ लोहितक²-लक्ष्मीपुष्पा³-रुणोपलाः⁴ ॥१३०॥
नीलमणि¹ रिन्द्रनीलः² सूचीमुखं¹ तु हीरकः² ।
वराटकं³ रत्नमुख्यं⁴ वज्रपर्य्यायनाम⁵ च ॥१३१॥
विराटजो¹(२) राजपट्टो² राजावर्त्तो³ ऽथ विद्रुमः¹ ।
रक्ताङ्गो² रक्तकन्दः³ स्यात् प्रवालं⁴ हेमकन्दलः⁵ ॥१३२॥
सूर्यकान्तः¹ सूर्यमणिः² सूर्याश्मा³ दहनोपलः⁴ ।
चन्द्रकान्त¹ श्चन्द्रमणि² श्चान्द्र³ श्चन्द्रोपल⁴ श्च सः ॥१३३॥
क्षीरतैलस्फटिकाख्या सन्यौ खस्फटिका¹ विमौ ।
शुक्तिजं¹ मौक्तिकं² मुक्ता³ मुक्ताफलं⁴ रसोद्भवम्⁵(३) ॥१३४॥

इति पृथ्वीकायः ॥

---

(१) "वैदूर्य्यम्" इत्यपि। मणी इत्यपि क्वचित्, मणिकः माणिक्यम् एतावपि च, अष्टविधा रत्नजातिः यद्वाचस्पतिः "हीरकं१ मौक्तिकं२ स्वर्णं३ रजतं४ चन्दनानि च ५, शङ्ख ६ चर्म्म च ७ रत्नं ८ चेत्यष्टौ स्युः रत्नजातयः" ॥

(२) विराटदेशोद्भवरत्नस्य विराटज हीरकस्य वा ॥

(३) हस्तिमस्तकाद्युद्भवमपि मौक्तिकमुच्यते यदाह "हस्तिमस्तकै

## अथाप्कायः ।

नीरं[1] वारि[2] जलं[3] दकं[4] क[5]मुदकं[6] पानीय[7]मम्भ[8]कुशं[9] तोयं[10]
जीवनं[11]-जीवनीय[12]-सलिला[13]-र्णांस्या[14]म्बु[15]वाः[16]शम्बरम्[17]।
(1)क्षीरं[18]पुष्कर[19]-मेघपुष्प[20]-कमला[21] न्यापः[22](2) पयः[23]-
पाथसी[24],कीलालं[25]भुवनं[26]वनं[27]घनरसो[28] यादोनिवासो[29]
ऽमृतम्[30] ॥ १३५ ॥

कुलीनसं[1] कबन्धं[2] च प्राणदं[3] सर्वतोमुखम्[4] ।
अस्थाघा[1] ऽस्थाग[2]मस्ताघ[3] मगाधं[4]चा ऽतलस्पृशि[5] ॥१३६॥
निम्नं[1]गभीरं[2] गम्भीरं[3] मुत्तानं[1] तद्विलक्षणम् ।
अच्छं[1] प्रसन्नं[2] ऽनच्छं[1] स्यादा विलं[2] कलुषं[3]च तत् ॥१३७॥
अवश्याय[1]स्तु तुहिनं[2] प्रालेयं[3] मिहिका[4] हिमम्[5] ।
स्या न्नीहार[6]स्तुषार[7]श्च हिमानी[1] तु महद्धिमम् ॥१३८॥
(2)पारावारः[1] सागरो[2] ऽवारपारो[3]
ऽकूपारो[4]-दध्य[5]-र्णवा[6] वीचिमाली[7] ।

---

दन्तौ तु दंष्ट्रासु च वराहयोः । मेघो भुजङ्गमोऽङ्गणमत्स्यो मौक्तिक योनयः" इति । मौक्तिकानां हि नानाविधत्वसस्थावरशरीरेषु उत्पत्ति सद्भावेऽपि पृथिवीकायत्वमेव, धर्मगिरः शुमणयः करिदन्तेषु मौक्तिकानि विकलेन्द्रियेषु शुक्त्यादिषु मौक्तिकानि स्थावरेष्वपि वेणवादिषु तान्येवेति वचनाद् न दुष्टं मौक्तिकानां पृथ्वीकायत्वम् ॥

(१) क्षीर धवलः स्फटिकः क्षीरस्फटिकः तैलकान्तिः स्फटिकः तैलस्फटिकः ताभ्यामन्यौ भिन्नवर्णौ इमौ सूर्यकान्त चन्द्रकान्तौ द्वावपि स्फटिकाख्यावित्यर्थः ॥

(२) आपः स्त्रीलिङ्गो बहुवचनान्तः ॥ (३) पारापारोऽपि ॥

यादः[८]-स्रोतो[९]-वा-र्नदी[१०]-शः[११] [१] सरस्वान्
सिन्धु[१२]-रुदन्वान्[१४] मितद्रुः[१५] समुद्रः[१६] ॥१३९॥
आकरो[१८] मकर-रत्ना-भ्यां जल निधि[१९]-धि[२०]-राशयः[२१] [२]।
द्वीपान्तरा असङ्ख्यास्ते सप्तैवेति तु लौकिकाः ॥१४०॥
लवण[१]-क्षीर[२]-दध्या[३]-ज्य[४]-सु[५]-रेक्षु[६]-स्वादु[७]-वारयः [३]।
तरङ्गो[१] भङ्गो[२]-वीच्यू[३]-र्म्यु-त्[४]-कलिका[५] महति त्विह ॥१४१॥
लहर्यु[१]ल्लोल[२]-कल्लोला[३] आवर्तः[१] पयसां भ्रमः।
तालूरो[२] वातक[३]श्चासौ वेला[१] स्यादृद्धिरम्भसः ॥१४२॥
[४] डिण्डीरो[१]ऽब्धिकफः[२] फेनो बुद्बुद[१]-स्थासकौ[२] समौ।
मर्यादा[१] कूलभूः कूलं[१] प्रपातः[२] कच्छ[३]-रोधसी[४] ॥१४३॥

---

(१) यादईशः १ स्रोतईशः २ वारीशः ३ नदीशः ४।

(२) मकराकरः १ रत्नाकरः २ यौगिकत्वात् मकरालयः रत्नराशिः जलनिधिः १ जलधिः २ जलराशिः ३। यौगिकत्वात् वारिराशिः वारिधिः इत्यादयोऽप्युह्याः।

(३) लवणादयो वारि येषां ते तथा लवणवारि लवणोद समुद्रः १ क्षीरवारि क्षीरोदसमुद्रः २ दधिवारि दध्युदसमुद्रः ३ आज्यवारि घृतोदसमुद्रः ४ सुरावारिः सुरोदसमुद्रः ५ इक्षुवारिः इक्षूदसमुद्रः ६ स्वादुवारिः स्वादूदसमुद्रः ७। यदाहुः "लवणो १ रसमयः २ सुरोदकः ३ सार्पिषो ४ दधिजलः ५ पयः पयाः ६ स्वादु ७ वारि इदधिश्च सप्तमस्तान् परीत्य त इमे व्यवस्थिताः" इति॥

(४) डीङ् विहायसांगतौ भ्वादिरात्मनेपदी डयते जलाघातैरिति डिण्डीरः अब्धीराभीरेति सूत्रेण डीडोऽपिवत् ईरीदित्वं पूर्वस्यानोन्तश्च उज्ज्वलदत्तस्तु डिण्ड गत्यमादरयोः बाहुलकादतोपि इरन् प्रत्यये डिण्डते इतस्ततो गच्छतीति डिण्डीरः इत्याह॥

तटं[1] तीरं[2] प्रतीरं[3] च पुलिनं[1] तज्जलोज्झितम्।
सैकतं[2] स्यादन्तरीपं[1] तु द्वीप[2]मन्तर्जले तटम्॥१४४॥
तत् परं पार[1]मवारं[1] त्ववाक् पात्रं[1] तदन्तरम्।
नदी[1] हिरण्यवर्णा[2] स्याद्रोधोवक्रा[3] तरङ्गिणी[4]॥१४५॥
सिन्धुः[5] शैवलिनी[6] वक्षा[7] च ह्रदिनी[8] स्रोतस्विनी[9] निम्नगा[10]।
स्रोतो[11(1)] निर्झरिणी[12] सरि[13] च्च तटिनी[14] कूलङ्कषा[15] वाहिनी[16]।
कर्षू[17] द्वीपवती[18] समुद्रदयिता[19]-धुन्यौ[20] स्रवन्ती[21]-सरस्वत्यौ[22] पर्वतजा[23] ऽपगा[24] जलधिगा[25] कुल्या[26] वजम्बालिनी[27]॥१४६॥
गङ्गा[1] त्रिपथगा[2] भागीरथी[3] त्रिदशदीर्घिका[4]।
त्रिस्रोता[5] जाह्नवी[6] मन्दाकिनी[7] भीष्म[8]-कुमारसूः[9(2)]॥१४७॥
सरिद्वरा[10] विष्णुपदी[11] सिद्ध[12]-स्वः[13]-स्वर्गि[14]-खापगा[15(3)]।
ऋषिकुल्या[16] हैमवती[17] स्वर्वापी[18] हरशेखरा[19]॥१४८॥
यमुना[1] यमभगिनी[2] कालिन्दी[3] सूर्यजा[4] यमी[5]।
रेवे[1]न्दुजा[2] पूर्वगङ्गा[3] नर्मदा[4] मेखलाद्रिजा[5]॥१४९॥
गोदा[1] गोदावरी[2] तापी[1] तपती[2] तपनात्मजा[3]।
शुतुद्रि[1]स्तु शतद्रुः[2] स्यात् कावेरी[1] त्वर्द्धजाह्नवी[2]॥१५०॥
करतोया[1] सदानीरा[2] चन्द्रभागा[1] तु चन्द्रिका[2]।

---

(१) स्रो, स्रोतस्वती स्रोतांसि॥

(२) सूवद्रूपाणि भीष्मसूः १ कुमारसूः २॥

(३) सिद्धापगा १ स्वरापगा २ स्वर्ग्यापगा ३ खापगा ४॥

वाशिष्ठी[1] गोमती[2] तुल्ये ब्रह्मपुत्री[1] सरस्वती[2] ॥१५१॥
(१) विपाट्[1] विपाशा[2] ऽर्जुनी[1] तु बाहुदा[2] सैतवाहिनी[3] ।
वैतरणी नरकस्था[1] स्रोतो[1]ऽम्भःसरणं स्वतः ॥१५२॥
प्रवाहः[1] पुनरोघः[2] स्याद् वेणी[3] धारा[4] रय[5]श्च सः ।
घट्ट[1]स्तीर्थो[2]ऽवतारे[3]ऽम्बुवृद्धौ पूरः[1] प्लवो[2]ऽपि च ॥१५३॥
पुटभेदा[1]स्तु वक्राणि[2](२) भ्रमा[1]स्तु जलनिर्गमाः[2] ।
परीवाहा[1] जलोच्छ्वासाः[2] कूपका[1]स्तु विदारकाः[2] ॥१५४॥
प्रणाली[1](३) जलमार्गो[2]ऽथ पानं[1] कुल्या[2] च सारणिः[3] ।
सिकता[1](४) बालुका[2] विन्दौ पृषत्[1]-पृषत[2]-विप्रुषः[3](५) ॥१५५॥
जम्बाल[1]-चिकिलौ[2] पङ्कः[3] कर्दम[4]श्च निषद्वरः[5] ।
खातो[1] हिरण्यबाहु[1]स्तु शोणो[2] नदे[1] पुनर्वहः[2] ॥१५६॥
भिद्य[3]श्चौध्यः[4] सरस्वां[5]श्च द्रहो[1]ऽगाधजलो[2] ह्रदः[3] ।
कूपः[1] स्यादुदपानो[2]ऽन्धुः[3] प्रहि[4]र्नेमी[1] तु तत्त्रिका[2](६) ॥१५७॥

---

(१) विपाशौ विपाशः स्त्री ।

(२) "वक्रः कुटिले क्रूरे पुटभेदे शनैश्चरे" इति महेश्वरः । चक्राण्यपि यन्महेश्वरः "चक्रो गणे चक्रवाके चक्रं सैन्यरथाङ्गयोः । ग्रामजाले कुलालस्य भाण्डे राष्ट्रास्त्रयोरपि । अम्भसामपि चावर्त्ते" इति ॥

(३) त्रिषु ॥

(४) बहुवचनान्तः, "वालिका वालुका बाला पिच्छला च वर्णभूषणे" इति महेश्वरः ॥

(५) "पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियः" इत्यमरः । पृषती पृषन्तौ क्लीं, विप्रुट् विप्रुषौ स्त्री ।

(६) कूपमुखबन्धनस्य ॥

नान्दीमुखो[1] नान्दीपटो[2] वीनाहो[3] मुखबन्धने ।
आहावस्तु[1] निपानं[2](1) स्यादुपकूपे ऽथ दीर्घिका[1] ॥१५८॥
वापी[2] स्याद् क्षुद्रकूपे तु चुरी[1] चुण्डी[2] च चतकः[3](2) ।
उद्घाटकं[1] घटीयन्त्रं[2](3) पादावर्त्तो[1] ऽरघट्टकः[2] ॥१५९॥
अखातं[1] तु देवखातं[2] पुष्करिण्यां[1] तु खातकम्[2] ।
पद्माकर[1]स्तडागः[2] स्यात्(4) कासारः[3]सरसी[4]सरः[5] ॥१६०॥
वेशन्तः[1] पल्वलो[2] ऽल्पं तत् परिखा[1] खेय[2]-खातिके[3] ।
स्यादालवाल[1]मावाल[2](5)मावापः[3]स्थानकं[4] च सः ॥१६१॥
आधार स्त समो बन्धो[1] निर्झरं[1] तु झरः[2] सरिः[3] ।
उत्सः[4]स्रवः[5]प्रस्रवणं[6]जलधारा[7]जलाशयाः[2] ॥१६२॥

इत्यप्कायः ।

## अथ तेजस्कायः ।

वह्नि[1] र्दहन्[2] हिरण्यरेतसौ[3]
धनञ्जयो[4] हव्य[5]-हवि[6]-र्हुताशनः[7](6) ।

(1) पश्वादीनां पानार्थं शिलादिभिः कूपसमीपे निर्मितम् ॥

(2) "चूतकां नीरसं पीत्वा पान्था पथिमुखं ययुः" इति माला ॥

(3) येन कूपादे र्जलमूर्ध्वं वाह्यते तद्यन्त्रस्य ॥

(4) तटाक इत्यन्ये ॥

(5) आवालं स्मरते क्षीरस्वामी ; व्याडिस्तु "आवापो वृक्षपिण्डकः" इति पुंस्याह ॥

(6) हव्याशनः १ हविरशनः २ हुताशनः ३ ॥

(1)कपीटयोनि[८]र्दमुना[९](2) विरोचनः[१०]-

शुशुक्षणि[११]श्छागरथ[१२]स्तनूनपात्[१३](3) ॥१६३॥

कृशानु[१४]-वैश्वानर[१५]-वीतिहोत्रा[१६]

वृषाकपिः[१७] पावक[१८]-चित्रभानू[१९] ।

(4)अग्निस्त[२०]-धूमध्वज[२१]-कृष्णवर्त्मा[२२]-

ऽर्चिष्मा[२३](5) शमीगर्भ[२४]-तमोघ्न[२५]-शुक्राः[२६] ॥१६४॥

शोचिष्केशः[२७] शुचि[२८]-हुतवहो[२९]-षर्बुधः[३०]-सप्त[३१]-मन्त्र[३२]-

ज्वाला-जिह्वा[३३](6) ज्वलन[३४]-शिखिनौ[३५] जागृवि[३६] र्जात-

वेदाः[३७](7) ।

बर्हिःशुष्मा[३८](8) ऽनिलसख[३९]-वसू[४०] रोहिताश्वा[४१]-श्रयाशो[४२]

(9)बर्हिर्ज्योति[४३] र्दहन[४४]-वह्नी[४५] हव्यवाहो[४६] ऽनलो[४७]

ऽग्निः[४८] ॥१६५॥

---

(1) कपीटं जलं योनिरस्य यत् स्मृतिः, अद्भ्योऽग्निर्ब्रह्मणः क्षत्रमिति ॥

(2) दमुनाः दमुनसौ दमुनसः दमूनाः इति । दीर्घोऽप्युकारः ॥

(3) तनूनपातौ तनूनपातः ॥

(4) अग्निस्तवर्जा एते सर्वे पुंसि वह्निपर्य्यायाः ॥

(5) कृष्णवर्त्मानौ कृष्णवर्त्मानः, अर्चिष्मान् अर्चिष्मन्तौ अर्चिष्मन्तः, अत्र नकं पदमध्य इति पदप्रतिषेधात् नाम्यन्तस्थेति षकारस्य षत्वम् ॥ (6) सप्तजिह्वः १ मन्त्रजिह्वः २ ज्वालाजिह्वः ३ ॥

(7) शिखी शिखिनौ शिखिनः, जागृविः हरिवत् जातवेदस् सान्तः ॥ (8) बर्हिःशुष्माणौ बर्हिःशुष्माणः ॥

(9) बर्हिर्ज्योतिषौ बर्हिर्ज्योतिषः, बर्हिषौ बर्हिषः, बर्हिरि इसन्तनामापि ॥

विभावसुः[४९] सप्तो-दर्चिः[५०](१) स्वाहाऽग्नायीप्रियाऽस्य च ।
और्वः[१] संवर्त्तको ऽब्ध्यग्नि[२] र्वाड़वो[४] वड़वामुखः[५] ॥१६६॥
दवो[१] दावो[२] वनवह्नि[३] र्मेघवह्नि[१] रिरम्मदः[२] ।
छागण[१]स्तु करीषाग्निः[२] कुकूल[१]स्तु तुषानलः[२] ॥१६७॥
सन्तापः[१] सञ्ज्वरो[१] बाष्प[१] ऊष्मा[२] जिह्वाः स्यु रर्चिषः[१](२) ।
हेतिः[१] कीला[२] शिखा[३] ज्वाला[४] ऽर्चि[५] र्झलका[१] मलत्ययौ ॥१६८॥
स्फुलिङ्गो[१] ऽग्निकणो ऽलातज्ज्वालो ल्का[१]ऽलात[१]मुल्मुकम्[२] ।
धूमः[१] स्या द्वायुवाहो[२] ऽग्निवाहो[३] दहनकेतनम्[४] ॥१६९॥
अम्भःसूः[५] करमाल[६]श्च सरी[७] जीमूतवाह्य[८]पि(३) ।
तडि[१]दैरावती[२] विद्यु[३]च्चला[४] शम्पा[५] ऽचिरप्रभा[६] ॥१७०॥
आकालिकी[७] शतह्रदा[८] चञ्चला[९] चपला[१०] ऽशनिः[११] ।
सौदामिनी[१२] क्षणिका[१३] च ह्रादिनी[१४] जलवालिका[१५] ॥१७१॥

इति तेजस्कायः ।

---

## अथ वायुकायः ।

वायुः[१] समीर-समिरौ[३] पवना[४]-ऽऽशुगौ[५] नभः-
श्वासो[६] नभस्व[७](४)-दनिल[८]-श्वसनाः[९] समीरणाः[१०] ।

---

(१) सप्तार्चिषौ सप्तार्चिषः, उदर्चिषौ उदर्चिषः, स्वाहा गङ्गावत् अव्ययमपि ॥

(२) ऊष्माणौ ऊष्माणः, स्त्री क्लो, स्त्रियां अर्चिः अर्चिषौ अर्चिषः, क्लीबे अर्चिः अर्चिषी अर्चींषि । अर्चिः इति तृतीयस्वरान्तोऽपि ॥

(३) जीमूतवाहिनौ जीमूतवाहिनः ॥

(४) नभस्वान् नभस्वन्तौ ॥

वातो[11] दिक्कान्त[12]-समान[13]-मरुत्[14]-प्रकम्पनाः[15]

कम्पाक[16]-नित्यगति[17]-गन्धवह[18]-प्रभञ्जनाः[19] ॥१७२॥

मातरिश्वा[20] जगत्प्राणः[21] पृषदश्वो[22] महाबलः[23] ।

मारुतः[24] स्पर्शनो[25] दैत्यदेवो[26], झञ्झा[1]स-वृष्टियुक् ॥१७३॥

प्राणो[1] नासाग्रहृन्नाभिपादाङ्गुष्ठान्तगोचरः ।

अपानः[1] पवनो मन्या[(1)] पृष्ठपृष्ठान्तपार्ष्णिगः ॥१७४॥

समानः[1] सन्धिहृन्नाभिषूदानो[1] हृच्छिरोऽन्तरे ।

सर्वत्वग्वृत्तिको व्यान[1] इत्यङ्गे पञ्च वायवः ॥१७५॥

इति वायुकायः ।



अरण्य[1] मटवी[2] सत्रं[3] वार्क्षं[4] च गहनं[5] झषः[6] ।

कान्तारं[7] विपिनं[8] कक्षः[9] स्यात् षण्डं[10] काननं[11] वनम्[12] ॥१७६॥

दवो[13] दावः[14], प्रस्तार[1] स्तु तृणाटव्यां[2] झषो[3]ऽपि च ।

अपो-पाभ्यां वनं[2(2)] वेल[3]मारामः[4] कृत्रिमे वने ॥ ७७॥

निष्कुट[1] स्तु गृहारामो, बाह्यारामस्तु पौरकः[2] ।

आक्रीडः[1] पुन रुद्यानं[2] राज्ञां त्वन्तःपुरोचितम् ॥१७८॥

तदेव प्रमदवन[1] ममात्यादेस्तु निष्कुटे ।

वाटी[1(3)] पुष्पा द्रुचा श्वासौ[(4)] क्षुद्रारामः प्रसीदिका[1] ॥१७९॥

---

(१) मन्या ग्रीवापश्चाद्भागः ॥

(२) अपवनम् १ उपवनम् २ ॥

(३) वाटस्तु वर्त्मनि वृतौ वाटी स्याद्गृहनिष्कुटे इति श्रीधरः ॥

(४) पुष्पवाटी १ वृक्षवाटी २ वाटी शब्द इत्यर्थः ॥

वृक्षो[1]ऽग[2]शिखरी[3]च शाखि[4]-फलदा[5]ऽद्रि[6]र्हरिद्रु[7]द्रुमो[8]
जीर्णो[9]द्रु[10]र्विटपी[11] कुठः[12(1)] क्षितिरुहः[13]कारस्करो[14]
विष्टरः[15]।
नन्द्यावर्त्त[16]-करालिकौ[17] तरु[18]-वसू[19] पर्णी[20] पुलाक्यं[21]
ह्रिपः[22]साला[23]-नोकह[24]-गच्छ[25]-पादप[26]-नगा[27]रुक्षा[28]-
गमौ[29] पुष्पदः[30] ॥१८०॥

कुञ्ज[1]-निकुञ्ज[2]-कुड़ङ्गाः[3] स्थाने वृक्षै र्लता-न्तरे।
पुष्पैस्तु फलवान् वृक्षो वानस्पत्यो[1] विना तु तैः ॥१८१॥
फलवान् वनस्पतिः[1] स्यात् फलावन्ध्यः फलेग्रहिः[1]।
फलवन्ध्य स्त्ववकेशी[1]फलवान्[1] फलिनः[2] फली[3] ॥१८२॥
ओषधिः[1] स्या दोषधि[2] श्च फलपाकावसानिका।
क्षुपो[1] ह्रस्वशिफाशाखः प्रतति[1] र्वतति[2] र्लता[3] ॥१८३॥
वल्ली[4] स्यां तु प्रतानिन्यां[1] गुल्मिन्यु[2]-लप[3]-वीरुधः[4]।
स्या त्प्ररोहो[1]ऽङ्कुरो[2]ऽङ्कूरो[3]रोह[4]श्च स तु पर्व्वणः ॥१८४॥
समुत्थितः स्याद् बल्लिशं[1] शिखा[1]-शाखा[2]-लताः[3] समाः।
साला[1]शाला[2]स्कन्धशाखा[3]स्कन्धः[1]प्रकाण्डमस्तकम् ॥१८५॥
मूलाच्छाखावधि र्गण्डः प्रकाण्डो[1]ऽथ जटा[1] शिफा[2]।
प्रकाण्डरहिते स्तम्बो[1]विटपो[2]गुल्म[3] इत्यपि ॥१८६॥
शिरोनामा[1(2)]ऽग्रं[2] शिखरं[3] मूलं[1] बुध्नो[2]ऽङ्घ्रिनाम[3] च।

---

(१) कुठिः सौत्र कोठति कुठः। कुठान् वृक्षान् इयर्त्ति कुठारः। जीर्ण इत्यत्र जिर्णः अतः इति पाठान्तरः। [पर्य्याया अस्य॥

(२) शिरसो नामानि पर्य्यायाः अस्य अग्रस्य चरणस्य नामानि

सारो[1] मज्जि(1) त्वचिस्त्री[1] चोचं[2] वल्कं[4] च वल्कलम्[5] ॥१८७॥
स्थाणौ[1] तु ध्रुवकः[2] शङ्कुः[3] काष्ठे[1] दलिकं[2] दारुणी[3]।
निष्कुहः[1] कोटरो[2] मञ्जा[1] मञ्जरि[2] र्वल्लरि[3] श्च सा ॥१८८॥
पत्रं(2) पलाशं[2] छदनं दलं[3] पर्णं[4] छदं[5] दलम्[7]।
नवे तस्मिन् किसलयं[1] किसलं[2] पल्लवो[3] ऽत्र तु(3) ।१८९॥
नवे प्रवालो[1] ऽस्य कोशी[1] शुङ्गा[2](4) माढ़ि[1] र्दलस्नसा।
विस्तार[1]-विटपौ[2] तुल्यौ प्रसूनं[1] कुसुमं[2] सुमम्[3] ॥१९०॥
पुष्पं[4] सूनं[5] सुमनसः[6](5) प्रसव[7] श्च मणीवकम्[8]।
जालक[1]-क्षारकौ[2] तुल्यौ कलिकायां[1] तु कोरकः[2] ॥१९१॥
कुट्मलो[1] मुकुलं[2] गुच्छो[1] गुच्छ[2]-स्तबक[3]-गुत्सकाः[4]।
गुलुञ्छो[5]ऽथ रजः पौष्पं परागो[1] ऽथ रसो मधु[2](6) ॥१९२॥
मकरन्दो[2] मरन्द[3] श्च वृन्तं[1] प्रसवबन्धनम्।

---

(१) मज्जा मज्जानौ मज्जानः, त्वक् त्वग् त्वचौ त्वचः, अदन्तो-ऽपि त्वचा स्त्रियाम् अदन्तोऽपि त्वचः पुंसि इति हलायुधटीका ॥

(२) प्रज्ञाद्यणि पात्त्रमपि यन्महेश्वरः "पात्रं स्रुवादौ पर्णे च राजमन्त्रिणि चेष्यते" इति अयं द्वितकार-एकतकारस्य धातुप्रत्यय-भेदात् ॥

(३) कन्दलमपि त्रिलिङ्गोऽयं "कन्दलं तु कपाले स्यादुपरागे नवाङ्कुरे" इति कोषान्तरम् ॥

(४) शुङ्गा आवन्तः-पुं स्त्रीलिङ्गोऽयं यद्वाग्भटः, वटप्ररोहैः शुङ्गै-ति ॥

(५) बहुवचनान्तः स्त्री ॥

(६) मधु क्लीबे, पुंस्यपीति हलायुधटीका। गलकन्दोऽपि ॥

प्रबुद्धो¹-ज्जृम्भ²-फुल्लानि³ व्याकोशं⁴ विकचं⁵ स्मितम्⁶ ॥१८३॥
उन्मिषितं⁷ विकसितं⁸ दलितं⁹ स्फुटितं¹⁰ स्फुटम्¹¹ ।
प्रफुल्लो¹²त्फल्ल¹³-सम्फुल्लो¹⁴-च्छ्वसितानि¹⁵ विजृम्भितम्¹⁶ ॥१८४॥
स्मेर¹⁷ विनिद्र¹⁸ मुन्निद्र¹⁹ विमुद्र²⁰ हसितानि²¹ च ।
सङ्कुचितं तु निद्राणं¹ मीलितं² मुद्रितं³ च तत् ॥१८५॥
फलं¹ तु सस्यं² तच्छुष्कं वानं¹ साम² शलाटु¹ च ।
ग्रन्थिः¹ पर्व²(१) टङ्क³ बीजकोशी¹ शिम्बा² शमिः³ शमी⁴ ॥१८६॥
शिम्बि⁵श्च पिप्पलो¹ ऽश्वत्थो² बोधिद्रुः³ कुञ्जराशनः⁴ ।
कृष्णावासो⁵ बोधितरुः⁶ प्लक्ष¹स्तु पर्कटी² जटी³ ॥१८७॥
न्यग्रोध¹स्तु बहुपात्² स्याद्वटो³ वैश्रवणालयः⁴ ।
उदुम्बरो¹ जन्तुफलो² मशको³ हेमदुग्धकः⁴ ॥१८८॥
काकोदुम्बरिका¹ फल्गु² र्मलयु³ र्जघनेफला⁴ ।
आम्र¹श्चूतः² सहकारः³ सप्तपर्ण¹स्तु युक्छदः² ॥१८९॥
शिग्रुः¹ शोभाञ्जनो² ऽक्षीव³-तीक्ष्णगन्धक⁴-मोचकाः⁵ ।
श्वेते ऽत्र श्वेतमरिचः¹ पुन्नागः¹ सुरपर्णिका² ॥२००॥
वकुलः¹ केसरो² ऽशोकः¹ कङ्केल्लिः²(२) ककुभो¹ ऽर्ज्जुनः² ।
मालूरः¹ श्रीफलो² विल्वः³ किङ्किरातः¹ कुरण्टकः² ॥२०१॥
त्रिपत्रकः¹ पलाशः² स्यात् किंशुको³ ब्रह्मपादपः⁴ ॥
तृणराज¹ स्तल² स्तालो³ रम्भा¹ मोचा² कदल्य³पि ॥२०२॥

(१) नान्तः क्ली, पर्वणो पर्व्वमपि क्ली ४

(२) कमुदकं केलति गच्छति कङ्केल्लिः, स्त्रीलिङ्गः अदन्तश्चायं ग:
"स्त्रियां त्वशोके कङ्केल्लिः" पृषोदरादित्वात् ३

करवीरो[1] हयमारः[2] कुटजो[1] गिरिमल्लिका[2] ।
निचुलो[1] वेतसः[2] शीतो[3] वानीरो[4] वञ्जुलो[5] रथः[6] ॥२०३॥
(1) कर्कन्धुः[1] कुवली[2] कोली[3] बदरी[4] च हलिप्रियः[1] ।
नीपः[2] कदम्बः[3] शाल[1]स्तु सर्जो[2]ऽरिष्ट[1]स्तु फेनिलः[2] ॥२०४॥
निम्बो[1]ऽरिष्टः[2] पिचुमन्दः[3] समौ तिन्दुक[1]-कामुकौ[2] ।
कार्पास[1]स्तु बादरः[2] स्यात् पिचव्यं[3] तूलकं[1] पिचुः[2] ॥२०५॥
आरग्वधः[1] कृतमाले[2] वृषो[1] वासा[2]ऽटरूषके[3] ।
करञ्ज[1]स्तु नक्तमालः[2] वह्नि[1]र्वीरो[2] भल्लातकः[3] ॥२०६॥
महाकाल[1]स्तु किम्पाके[2] मन्दारः[1] पारिभद्रके[2] ।
मधुक[1]स्तु मधुष्ठीलो[2] गुडपुष्पो[3] मधुद्रुमः[4] ॥२०७॥
पीलुः[1] सिमो[2] गुडफलो[3] गुग्गुलु[1]स्तु पलङ्कषः[2] ।
राजादनः[1] पियालः[2] स्यात् तिनिश[1]स्तु रथद्रुमः[2] ॥२०८॥
नागरङ्ग[1]स्तु नारङ्गे[2] इङ्गुदी[1] तापसद्रुमः[2] ।
काश्मरी[1] भद्रपर्णी[2] श्रीपर्ण्य[3]म्लिका[1]तु तिन्तिडी[2] ॥२०९॥
शेलुः[1] श्लेष्मातकः[2] पीतसाल[1]स्तु प्रियको[2]ऽसनः[3] ।
पाटलिः[1] पाटला[2] भूर्जो[1] बहुत्वक्को[2] मृदुच्छदः[3] ॥२१०॥
द्रुमोत्पलः[1] कर्णिकारे[2] निचुले[1] हिज्जले[2]ऽम्बुजौ[3] ।
धात्री[1] शिवा[2]ऽऽमलकी[3] कलि[1]रक्षो[2] बिभीतकः[3] ॥२११॥
हरीतक्य[1]भया[2] पथ्या[3] त्रिफला[1] तत् फलत्रयम् ।
तापिच्छ[1]स्तु तमालः[2] स्याच्चम्पको[1] हेमपुष्पकः[2] ॥२१२॥

---

(1) पुं स्त्री, स्त्रियां कर्कन्धूः कर्कन्धौ कर्कन्धुः ॥

निर्गुण्डी[1] सिन्दुवारे[2]ऽतिमुक्तके[1] माधवी[2] लता[3] ।
वासन्ती[4] ओड्रपुष्पं[1] तु जपा[2] जाति[1]स्तु मालती[2] ॥२१३॥
मल्लिका[1] स्याद्विचकिलः[2] सप्तला[1] नवमालिका[2] ।
मागधी यूथिका[2] सा तु पीता स्याद्धेमपुष्पिका[1] ॥२१४॥
प्रियङ्गुः[1] फलिनी[2] श्यामा[3] बन्धूको[1] बन्धुजीवकः[2] ।
करुणो[1] मल्लिकापुष्पो[2] जम्बीरो[1] जम्भ[2]-जम्भलौ[3] ॥२१५॥
मातुलुङ्गो[1] बीजपूरः[2] करीर[1]-क्रकरौ[2] समौ ।
पञ्चाङ्गुलः[1] स्यादेरण्डे[2] धातक्यां[1] धातुपुष्पिका ॥२१६॥
कपिकच्छू[1]रात्मगुप्ता[2] धत्तूरः[1] कनकाह्वयः[2] ।
कपित्थ[1]स्तु दधिफलो[2] नालिकेर[1]स्तु लाङ्गली[2] ॥२१७॥
आम्रातको[1] वर्षपाकी[2](1) केतकः[1] क्रकचच्छदः[2] ।
कोविदारो[1] युगपत्रः[2] सल्लकी[1] तु गजप्रिया[2] ॥२१८॥
वंशो[1] वेणु[2]र्यवफल[3]स्त्वचिसार[4]स्तृणध्वजः[5] ।
मस्करः[6] शतपर्वा[7] च स्वनन् वातात्स कीचकः[1] ॥२१९॥
तुगाक्षीरी[1] वंशक्षीरी[2] त्वक्क्षीरी[3] वंशरोचना[4] ।
पूगः[1] क्रमुक[2]गुवाकौ[3] तस्योद्वेगं[1] पुनः फलम् ॥२२०॥
ताम्बूलवल्ली[1] ताम्बूली[2] नागपर्य्यायवल्ल्य[3]पि(2) ।
तुम्ब्य[1]लाबुः[2](3) कृष्णला[1] तु गुञ्जा[2] द्राक्षा[1] तु गोस्तनी ॥२२१॥
मृद्वीका[3] स्वादुरसा[4] च गोक्षुर[1]स्तु त्रिकण्टकः[2] ।

---

(१) वर्षपाकिणौ वर्षपाकिणः ॥

(२) नागवल्ली फणिलता इत्यादि ॥

(३) स्त्री क्ली, द्वावपि ॥

श्वदंष्ट्रा[3] स्थलशृङ्गाटो[4] गिरिकर्ण्यऽपराजिता[2] ॥२२२॥
व्याघ्री[1] निदिग्धिका[2] कण्टकारिका[3] स्याद्दयाऽमृता[1] ।
वत्सादनी[2] गुडूची[3] च विशाला[1] त्विन्द्रवारुणी[2] ॥२२३॥
उशीरं वीरणीमूले ह्रीवेरं[1] बालकं[2] जलम्[3] ।
प्रपुन्नाट[1]स्त्वेडगजो[2] दद्रुघ्न[3] श्चक्रमर्दकः[4] ॥२२४॥
लङ्कायां[1] महारजनं[2] कुसुम्भं[3] कमलोत्तरम्[4] ।
लोध्रः[1] तु गालवो[2] रोध्र[3]-तिल्व[4]-शाबर[5]-मार्जनाः[6] ॥२२५॥
मृणालिनी[1] पुटकिनी[2] नलिनी[3] पङ्कजिन्य[4]पि ।
कमलं[1] नलिनं[2] पद्मं[3] अरविन्दं[4] कुशेशयम्[5] ॥२२६॥
परं शतसहस्राभ्यां पत्रं[7(1)] राजीव[8]-पुष्करे[9] ।
बिसप्रसूनं[10(2)] नालीकं[11] तामरसं[12] महोत्पलम्[13] ॥२२७॥
तज्जलात् सरसः पङ्कात् परैः रुट्-रुह-जन्म-जैः[14(3)] ।
पुण्डरीकं[1] सिताम्भोजं अथ रक्तसरोरुहे[1] ॥२२८॥
रक्तोत्पलं[2] कोकनदं[3] कैरविण्यां[1(4)] कुमुद्वती[2(5)] ।
उत्पलं[1] स्यात् कुवलयं[2] कुवेलं[3] कुवलं[4] कुवम्[5] ॥२२९॥

---

(१) शतपत्रं १ सहस्रपत्रम् २ ॥

(२) बिसात्प्रसूतं बिसप्रसूतं बिसप्रसूनं बिसनिसूनमपि इ
टीका ॥

(३) जलरुहौ जलरुहि, जलजन्मनि जलजन्मानि, सरोरु
सरोजन्मनी पङ्करुही, जलरुट् १ जलरुहं २ जलजन्म ३ जलजं
सरोरुट् ५ सरोरुहं ६ सरजन्म ७ सरोजं ८ पङ्करुट् ९ पङ्करुहं
पङ्कजन्म ११ पङ्कजं १२ ॥

(४) चन्द्रविकाशिन्याः ॥

(५) चन्द्रविकाशी कमलः ॥

सिते तु तत्र कुमुदं[1] कैरवं[2] गर्दभाह्वयम्[3] ।
नीले तु स्यादिन्दीवरं[1] हल्लकं[1] रक्तसन्ध्यके[2] ॥२३०॥
सौगन्धिकं[1] तु कह्लारं[2](१) बीजकोशो[1] वराटकः[2] ।
कर्णिका[3] पद्मनालं[1] तु मृणालं[2] तन्तुलं[3] बिसम्[4] ॥२३१॥
किञ्जल्कं[1] केसरं[2] संवर्त्तिका[1] तु स्यान्नवं दलम् ।
करहाटः[1] शिफा[2] च स्यात् कन्दे सलिलजन्मनाम्(२) ॥२३२॥
उत्पलानां तु शालूकं[1](३) नील्यां[1] शैवाल[2] शेवले[3] ।
शेवालं[4] शैवलं[5] शेपालं[6] जलाङ्कुक[7]-नीलिके[8](४) ॥२३३॥
धान्यं[1](५) तु सस्यं[2] सीत्यं[3] च व्रीहि[4] स्तम्बकरि[5]श्च तत् ।
आशुः[1] स्यात् पाटलो[2] व्रीहि[3]र्गर्भपाकी[1](६) तु षष्टिकः[2] ॥२३४॥
शालयः[1] कलमाद्याः स्युः कलम[1]स्तु कलामकः[2] ।
लोहितो रक्तशालिः[1] स्यान्महाशालिः[1] सुगन्धिकः[2] ॥२३५॥

---

(१) कैरविण्यादि कह्लारान्तं चन्द्रविकासिनि ॥

(२) कन्दं मूले च तत् हैमानेकार्थः "कन्दोऽब्दे सूरणे मस्तमूले" इति ॥

(३) उत्पलानां चन्द्रविकासिनाम् । धन्वन्तरिस्तु पद्ममूलं तु शालूकमित्याह ॥

(४) जलाङ्कुकं १ जलनीलिका २ ॥

(५) व्रीहि १ यवो २ मसूरो ३ गोधूमो ४ मुद्ग ५ माष ६ तिल ७ चणकाः ८ अणवः ९ प्रियङ्गु १० कोद्रव ११ मयुष्टकाः १२ शालि १३ राढक्यः १४ । किञ्च कलाय १५ कुलत्थौ १६ सारणाश्च १७ सप्तदशानि धान्यानि ॥

(६) नाम्नः कवर्गैकस्वरवदिति णत्वे गर्भपाकिणौ गर्भपाकिणः ॥

यवो[१] हयप्रियः[२] शितशूक[३]स्तोक्म[१]स्त्वसौ हरित् ।
मकुष्टको[१]मयुष्टः[२]स्यात् कलाय[१]स्तु सतीनकः[२] ॥२३६॥
हरेणुः[३] खण्डिक[४]श्चाथ चणको[१] हरिमन्थकः[२] ।
माष[१]स्तु मदनो[२]नन्दी[३]वृष्यो[४] बीजवरो[५]बली[६] ॥२३७॥
मुद्ग[१]स्तु प्रथनो[२] लोभ्यो[३] वराटो[४] हरितो[५] हरिः[६] ।
पीतेऽस्मिन् वसु[१]-खण्डरी[२]-प्रवेल[३]-जय[४]-शारदाः[५] ॥२३८॥
कृष्णे प्रवर[१]-वासन्त[२]-हरिमन्थज[३]-शिम्बिकाः[४] ।
वनमुद्गे तु वरक[१]-निगूढक[२]-कुलीनकाः[३] ॥२३९॥
खण्डी[४](१) च राजमुद्गे[१] तु मकुष्टक[२]-मयुष्टकौ[३] ।
गोधूमे[१]सुमनो[२]वल्ल[१](२) निष्पावः[२]सितशिम्बिकः[३] ॥२४०॥
कुलत्थ[१]स्तु कालवृन्त[२]स्ताम्रवृन्ता[१] कुलत्थिका[२] ।
आढकी[१]तुवरी[२]वर्णा[३]स्यात् कुल्माष[१]स्तु यावकः[२] ॥२४१॥
नीवार[१]स्तु वनव्रीहिः श्यामाक[१]-श्यामकौ[२] समौ ।
कङ्गु[१]स्तु कङ्गुनी कङ्गुः[३]प्रियङ्गु[४]पीततण्डुला[५] ॥२४२॥
सा कृष्णा मधुका[१] रक्ता शोधिका[१] मुसटी[१] सिता ।
पीता माधव्य[१]थोद्दालः[१] कोद्रवः[२]कोरदूषकः[३] ॥२४३॥
चीनक[१]स्तु काककङ्गु[२] र्वंशनाल[१]स्तु(३) वीनलः[२] ।
जूर्णाह्वयो[१]देवधान्यं[४]जोन्नाला[५]बीजपुष्पिका[६] ॥२४४॥

---

(१) खण्डिनौ खण्डिनः ॥

(२) सुमनः अप्रत्ययान्तत्वात् देववत् ॥

(३) मर्कटी गणिकायां स्यात् व्रीहिभेदेऽपि मर्कटी इति चोक्तः, अथामरो मर्कटिर्नि मर्कटी, राजमाषस्तु मर्कटः इति त्रिकाण्डशेषः ॥

शणा[1] भङ्गा[2] मातुलानी[3] स्यात् उमा[1] तु क्षुमा[2] ऽतसी[3] ।
गवेधुका[1] गवेधुः[2](१) स्या अर्त्तिलो[1] (२)ऽरण्यज तिलः ॥२४५॥
पण्डतिलो[1] तिलपिञ्ज[2] तिलपेजो[3] ऽथ सर्षपः[1] ।
कदम्बकः[2] तन्तुभो[3] ऽथ सिद्धार्थः[1] श्वेतसर्षपः[2] ॥२४६॥
माषादयः शमीधान्यं[1] शूकधान्यं[1] यवादयः ।
स्यात् सस्यशूकं[1] किंशारुः[2] कणिशं[1] सस्यशीर्षकम्[2] ॥२४७॥
स्तम्बः[1] गुलुच्छो[2] धान्यादे नालं[1] काण्डो[2] ऽफल तु सः ।
पलः[1] पलालो[2] धान्यत्वक् तुषो[1] बुसे[1] कडङ्गरः[2] ॥२४८॥
धान्य[1] मावसितं[1] रिद्धं[1] तत् पूतं निष्प्रवीकृतम् ।
मूल[1]-पत्र[2]-करीरा[3]-ग्र[4]-फल[5]-काण्डा[6]-धिरूढकाः[7] ॥२४९॥
त्वक्[8] पुष्पं[9] कवकं[10] शाकं[1] दशधा शिग्रुकं[2] च तत् ।
तण्डुलीय[1] स्तण्डुलेरो[2] मेघनादो[3] ऽल्पमारिषः[4] ॥२५०॥
बिम्बी[1] रक्तफला[2] पीलुपर्णी[3] स्या तुण्डिकेरिका[4] ।
जीवन्ती[1] जीवनी[2] जीवा[3] जीवनीया[4] मधुस्रवा[5] ॥२५१॥
वास्तुकं[1] तु क्षारपत्रं[2] पालक्या[1](३) मधुसूदनी[2] ।
रसोनो[1] लशुनो[2] ऽरिष्टो[3] म्लेच्छकन्दो[4] महौषधम्[5] ॥२५२॥
महाकन्दो[6] रसोनो ऽन्यो गृञ्जनो[1] दीर्घपत्रकः[2] ।
मकूराको[1] भृङ्गरजो[2] मार्कवः[3] केशरञ्जनः[4] ॥२५३॥

(१) मडुवा मरटी इति भाषा ।

(२) इहानुक्तान्यपि तिलनामानि लोपि यथा तिल १ पूत २ स्नेहफलः ३ इति मदनपालः ॥

(३) पालक्याम् इति वा ॥

काकमाची[1] वायसी[2] स्यात् कारवेल्लः[1] कठिल्लकः[2] ।
कूष्माण्डकस्[1]तु कर्कारुः[2] कोशातकी[1](२) पटोलिका[2] ॥२५४॥
चिर्भिटी[1] कर्कटी[2](३) वालुङ्की[3] वारु[4]स्त्रपुसी[5] च सा ।
अर्शोघ्नः[1] सूरणः[2] कन्दः[3] शृङ्गवेरक[1]मार्द्रकम्[2] ॥२५५॥
कर्कोटकः[1] किलासघ्न[2]स्तिक्तपत्रः[3] सुगन्धकः[4] ।
मूलकं[1]तु हरिपर्णं[2] सेकिमं[3] हस्तिदन्तकम्[4] ॥२५६॥
तृणं[1] नडादि निवारादि च शष्प तु तन्नवम् ।
सौगन्धिकं[1] देवजग्धं[2] पौरं[3] कतृण[4]-रौहिषे[5] ॥२५७॥
दर्भः[1] कुशः[2] कुथो[3] बर्हिः[4](४) पवित्र[5]मथ तेजनः[1] ।
गुन्द्रो[2] मुञ्जः[3] शरो[4] दूर्वा[1] त्वनन्ता[2] शतपर्विका[3] ॥२५८॥
हरिताली[4] रुहा[5] पोटगल[1]स्तु धमनो[2] नडः[3] ।
कुरुविन्दो[1] मेघनामा[2] मुस्ता[3] गुन्द्रा[1] तु सोत्तमा ॥२५९॥
वल्वजा[1] उलपो[2]ऽथेक्षुः[1] स्याद्रसालो[2]ऽसिपत्रकः[3] ।
(५)भेदाः[1] कान्तार[1]-पुण्ड्रा-द्यास्तस्य मूलं तु मोरटम्[1] ॥२६०॥
काश[1]स्त्विषीका[2] घासः[1] यवसं[2] तृण[1]मर्जुनम्[2] ।

---

(२) "कोशातकी शतच्छिद्रा जालिनी शतवेधना, मृदङ्गफलिका क्ष्वेडा धराटाली कर्कशच्छदा" इति ॥

(३) कर्कट्यां स्यादिर्वारुर्वारुवत् उर्वारुरुर्वारुरपि एर्वारुश्चिर्भिटी तथा चिर्भिटं चिर्भिट स्त्रद्वत् वालुङ्कः स्याद्वालुङ्क्यपि । त्रपुसी त्रपुषी त्रपुसं त्रिपुषम् इति शब्दभेदेनाममाला ॥

(४) पुंसि बर्हिषौ बर्हिषः क्लीबे बर्हिषी बर्हींषि ॥

(५) ऽस्या भेदा जातयः कान्ताराद्याः एकादश ॥

विषं[१] क्ष्वेडो[२] रस[३]स्तीक्ष्णं[४] गरलो[५](१)ऽथ हलाहलः[१] ॥२६१॥
वत्सनाभः[२] कालकूटो[३] ब्रह्मपुत्रः[४] प्रदीपनः[५] ।
सौराष्ट्रिकः[६] शौल्किकेयः[७] काकोलो[८] दारदो[९]ऽपि च ॥२६२॥
अहिच्छत्रो[१०] मेषशृङ्गः[११] कुष्ठ[१२]-वालूक[१३]-नन्दनाः[१४] ।
कैराटको[१५] हैमवतो[१६] मर्कटः[१७] करवीरकः[१८] ॥२६३॥
सर्षपो[१९] मूलको[२०] गौरार्द्रकः[२१] सक्तुक[२२]-कर्दमौ[२३] ।
अङ्कोल्लसारः[२४] कालिङ्गः[२५] शृङ्गिको[२६] मधुसिक्थकः[२७] ॥२६४॥
इन्द्रो[२८] लाङ्गलिको[२९] विस्फुलिङ्ग[३०]-पिङ्गल[३१]-गौतमाः[३२] ।
मुस्तको[३३] दालव[३४]श्चेति स्थावरा विषजातयः(२) ॥२६५॥
(३)कुरण्टाद्या अग्रबीजा[१] मूलजा उत्पलादयः[२] ।
पर्वयोनय इक्ष्वाद्याः[३] स्कन्धजाः सल्लकीमुखाः[४] ॥२६६॥
शाल्यादयो बीजरुहाः[५] सम्मूर्च्छजास्तृणादयः[६] ।
स्युर्वनस्पतिकायस्य षडेता मूलजातयः ॥२६७॥

इति वनस्पतिकायः ।

---

## द्वीन्द्रियाः ।

गण्डूः[१] कृमि[२]रन्तर्ज्जः क्षुद्रः कीटो[१] बहिर्भवः ।

---

(१) स्थावरविषजातीनामेकैकम् ॥

(२) विषभेदाः सर्व्वे पुंक्लीवलिङ्गाः इति वाचस्पतिः । पुंसि क्लीबे काकोलेत्याद्यमरोऽपि ॥

(३) वृक्षादिजातिविशेषानाह ॥

पुलका[1]स्तूभयेऽपि(1) स्युः कीकसाः[1] कृमयोऽस्थगाः ॥२६८॥
काष्ठकीटो[1] घुणो[2], गण्डूपदः[1] किञ्चुलकः[2] कुसूः[3] ।
भूलता[4], गण्डूपदी[1] तु शिल्या[2] स्त्रपा[1] जलौकसः[2] ॥२६९॥
जलालोका[3] जलूका[4] च जलौका[5] जलसर्पिणी[6] ।
मुक्तास्फोटो[1]ऽब्धिमण्डूकी[2] शुक्तिः[3] कम्बु[1]स्तु वारिजः[2] ॥२७०॥
त्रिरेखः[3] षोडशावर्तः[4] शङ्खो[5]ऽथ क्षुद्रकम्बवः[1] ।
शङ्खनकाः[2] क्षुल्लकाः[3] स्युः शम्बूका[1] स्त्वम्बुमात्रजाः ॥२७१॥
कपर्द[1]स्तु हिरण्यः[2] स्यात् पचास्थिक[3]-वराटकौ[4] ।

इति द्वीन्द्रियाः ।

## त्रीन्द्रियाः ।

दूर्नामा[1] तु दीर्घकोशी[2] पिपीलक[1]स्तु पीलकः[2] ॥२७२॥
पिपीलिका[1] तु श्रीनाक्षी[2] ब्राह्मणी[1] स्थूलशीर्षिका[2] ।
घृतेली[1] पिङ्गकपिशा[2]ऽथोपजिह्वो[1]पदेहिका[2] ॥२७३॥
वम्रुर[3] पदीका[4], लिक्षा[1] तु रिक्षा[2], यूका[1] तु षट्पदी[2] ।
गोपालिका[1] महाभीरु[2], र्गोमयोत्था[1] तु गर्दभी[2] ॥२७४॥
मत्कुण[1]स्तु कोलकुण[2] उद्दंशः[3] किटिभो[4]त्कुणौ ।
इन्द्रगोप[1]स्त्वग्निरजो[2] वैराट[3]स्तितिभो[4]ऽग्निकः[5] ॥२७५॥
कर्णजलौका[1] तु कर्णकीटा[2] शतपदी[3] च सा ।

इति त्रीन्द्रियाः ।

---

(1) उभये अन्तर्भवाः वहिर्भवाश्च ॥

## चतुरिन्द्रियाः।

ऊर्णनाभ[1]स्तन्तुवायो[2]लालिको[3] जालकारकः[4] ॥२७६॥
कृमि[5]र्मर्कटको[6]लूता[7]लालास्रावो[8]ऽष्टपा[9]च्च सः।
वृश्चिको[1]द्रुण[2](1)आल्या[3]लि[4]रलि[5]स्तत्पुच्छकण्टकः ॥२७७॥
भ्रमरो[1]मधुकृद्[2]भृङ्ग[3]श्चञ्चरीकः[4] शिलीमुखः[5]।
इन्दिन्दिरो[6]ऽली[7]रोलम्बो[8]द्विरेफो[9]ऽस्य षडङ्घ्रयः(2) ॥२७८॥
भोज्य स्तु पुष्प[1]-मधुनी[2](3) खद्योतो[1]ज्योतिरिङ्गणः[2]।
पतङ्गः[1]शलभः[2](4) क्षुद्रा[1]सरघा[2] मधुमक्षिका[3] ॥२७९॥
(5)माक्षिकादि तु मधु स्यान्मधुच्छिष्टं[1] तु सिक्थकम्[2] ॥
वर्वणा[1] मक्षिका नीला पुत्तिका तु पतङ्गिका[2] ॥२८०॥
वनमक्षिका तु दंशो[1] दंशी[1] तज्जाते रल्पिका।
तैलाटी[1]वरटा[2]गन्धोली[3] स्याच्चीरी[1] तु चीरुका[2] ॥२८१॥
झिल्लीका[3] झिल्लिका[4] वर्षकरी[5] भृङ्गारिका[6] च सा।

द्वित्रिचतुरिन्द्रियाः सम्पूर्णाः।

---

(1) आलमनर्थमत्रास्तीत्याली आलं स्यादनर्थ हरितालयोरित्यनेकार्थः, आलिनौ आलिनः। आली आलयः॥

(2) यौगिकशब्दनिष्पत्त्यर्थमिदम्। तेन षडङ्घ्रिः। षट्पदः इत्यादि॥

(3) पुष्पलिट् पुष्पन्धयः, मधुलिट् मधुधयः, मधुव्रतः इत्यादि सिध्यति॥

(4) 'शलभशब्दः तिड्डपर्य्यायोऽपि' यद्देशिसूत्रं तिड्डोसलहेपि वल्ला इति शलभः पिशाचस्य इति तट्टीका शलभच्छायमित्यत्र तिड्डानां कायेत्यर्थः॥

(5) माक्षिकं यौगिकत्वादादिशब्दाच्च क्षौद्रं सारघम्, मक्षिकाभ्रमराली स्यात् इत्यनुक्तेऽपि॥

## तिर्य्यक्काण्डः ।

पशु¹स्तिर्य्यङ्²चरि³र्हिंस्रे ऽस्मिन् व्यालः¹श्वापदो²ऽपि च ॥२८२

हस्ती¹ मतङ्गज²-गज³-द्विप⁴-कर्य्य⁵-नेकपाः⁶

मातङ्ग⁷-वारण⁸-महामृग⁹-सामयोनयः¹⁰⁽¹⁾ ।

स्तम्बेरम¹¹-द्विरद¹²-सिन्धुर¹³-नाग¹⁴दन्तिनो¹⁵

दन्तावलः¹⁶करटि¹⁷-कुञ्जर¹⁸-कुम्भि¹⁹-पीलवः²⁰⁽²⁾ ॥२८३॥

इभः²¹करेणु²²⁽³⁾ गजो²³ऽस्य स्त्री धेनुका¹वशा²ऽपि च ।

भद्रो¹मन्द्रो¹ मृगो¹मिश्र¹ श्चतस्रो गजजातयः ॥२८४॥

काले ऽप्य जातदन्तश्च स्वल्पाङ्गश्चापि मत्कुणो¹ ।

पञ्चवर्षो गजो बालः¹स्यात् पोतो¹ दशवर्षकः ॥२८५॥

विक्को¹ विंशतिवर्षः स्यात् कलभ¹ स्त्रिंशदब्दकः ।

यूथनाथो¹ यूथपति² र्मत्तो¹ प्रभिन्न² गर्ज्जितो³ ॥२८६॥

मदोत्कटो¹मदकलः² समावुद्वान्त¹-निर्मदौ² ।

सज्जितः¹कल्पित² स्तिर्य्यग्घाती परिणतो¹⁽⁴⁾ गजः ॥२८७॥

व्यालो¹ दुष्टगजो²गम्भीरवेद्य¹⁽⁵⁾ वसताङ्कुशः² ।

राजवाह्य¹ सूपवाह्यः²सन्नाह्यः¹ समरोचितः² ॥२८८॥

---

(१) सामयोनिः सामयोनी ॥

(२) पीलुः पीलू ॥

(३) करेणू करेणवः ॥

(४) तिर्य्यग्दन्तप्रहारस्तु गजः परिणतोमतः इति हलायुधः ॥

(५) "त्वग्भेदात् शोणितस्रावाद्मांसस्य व्यथनादपि । संज्ञां न लभ अस्तु गजो गम्भीरवेद्यसौ" इति [illegible] ॥

उद्ग्रह[1]स्त्रीषाढन्तो[2] वल्लभा घटना घटा[1] ।
मदो[1] दानं[2] प्रवृत्तिश्च[3] वमथुः[1] करशीकरः[2] ॥२८९॥
हस्तिनासा[1] करः[2] शुण्डा[3] हस्तो[4]ऽस्याग्रं तु पुष्करम्[1] ।
अङ्गुलिः[1] कर्णिका[2] दन्तौ[1] विषाणौ[2] स्कन्ध[1] आसनम्[2] ॥२९०॥
कर्णमूलं चूलिका[1] स्या दीपिका[1] त्वक्षिकूटकम् ।
अपाङ्गदेशो निर्य्याणं[1] गण्ड[1]स्तु करटः[2] कटः[3] ॥२९१॥
अवग्रहो[1] ललाटं[2] स्या दारवः[1] कुम्भयो रधः ।
कुम्भौ[1] तु शिरसः पिण्डौ कुम्भयो रन्तरं विदुः[1] ॥२९२॥
वातकुम्भ[1]स्तु तस्याधो वाहित्थं[1] तु ततोऽप्यधः ।
वाहित्थाधः प्रतिमानं[1] पुच्छमूलं तु पेचकः[1] ॥२९३॥
दन्तभागः[1] पुरोभागः पश्चभाग[1]स्तु पार्श्वतः ।
पूर्व्वस्तु जङ्घादिदेशो गात्रं[1](1) स्यात् पश्चिमोऽपरा[1] ॥२९४॥
बिन्दुजालं पुनः पद्मं[1] शृङ्खलो[1] निगडो[2]ऽन्दुकः[3] ।
हिञ्जीर[4]श्च पादपाशो[5] वारि[1]स्तु गजबन्धभूः ॥२९५॥
त्रिपदी[1] गात्रयो(२)र्बन्ध एकस्मिन्नपरेऽपि च ।
तोत्रं वेणुकं[2] मालानं[1] बन्धस्तम्भोऽङ्कुशः[1] सृणिः[2] ॥२९६॥
अपष्ठं[1] त्वङ्कुशस्याग्रं यात[1]मङ्कुशवारणम् ।
निषादिनां पादकर्म्म यतं वीतं[1] तु तद्द्वयम् ॥२९७॥

---

(1) गच्छत्यनेन गात्रं स्त्रियां गात्रा अपरभागे भवत्वादपरा स्त्रीत्वे अपरं जङ्घादित्वाद्वत्वेऽवरा ॥

(२) गात्रयोरिति द्वयोः पूर्व्वजङ्घयोः एकस्मिन् अपरे इति एकस्यापश्चिमजङ्घायां च अपरायन्दस्य स्त्री क्लीवत्वात् अपरे इति सप्तमी ॥

कक्ष्या[1] दूष्या[2] वरत्रा[3] स्यात् कण्ठबन्धः[1] कलापकः[2] ।

घोटकस्[1]तुरगस्[2]तार्क्ष्यस्[3]तुरङ्गो[4]ऽश्वस्[5]तुरङ्गमः[6] ॥१९८॥

गन्धर्वो[7]ऽर्वा[8](१) सप्ति[9]-वीतौ[10] वाहो[11] वाजी[12] हयो[13] हरिः[14]

वडवा[1]ऽश्वा[2] प्रसूर्[3]भामी[4] किशोरो[1]ऽल्पवया हयः ॥१९९॥

जवाधिकस्तु जवनो[1] रथ्यो[1] वोढा रथस्य यः ।

आजानेयः[1] कुलीनः[2] स्यात् तद्देश्यास्तु(२) सैन्धवाः[1] ॥२००॥

वानायुजाः[1] पारसीकाः[1] काम्बोजा[1] बाह्लिका[1]-दयः ।

विनीतस्तु साधुवाही[1] दुर्विनीतस्तु शूकलः[1] ॥२०१॥

कश्यः[1] कशार्हो हृदयावर्त्ती श्रीवत्सकी[1] हयः ।

पञ्चभद्रस्[1]तु हृत्पृष्ठमुखपार्श्वेषु पुष्पितः ॥२०२॥

पुच्छोरः खुरकेशास्यैः सितैः स्यादष्टमङ्गलः[1] ।

सिते तु कर्कः[1] कोकाहो[1] खोङ्गाहः[1] श्वेतपिङ्गले ॥२०३॥

पीयूषवर्णे सेराहः[1] पीते तु हरियो[1] हये ।

कृष्णवर्णे तु खुङ्गाहः[1] कियाहो[1] लोहितो हयः ॥२०४॥

आनीलस्तु नीलको[1]ऽथ त्रियूहः[2] कपिलो हयः ।

वोल्लाहस्[1]त्वयमेव(३) स्यात् पाण्डुकेसरवालधिः ॥२०५॥

---

(१) अर्वा अर्वाणौ अर्वाणः, अर्वाणम् इत्यादौ अनोऽस्य इत्यनेन जायमानाकारलोपे नयमन्तसंयोगात् इत्यनेन यमन्तसंयोगपरत्वाद् नकारस्य लोपाऽनुत्पत्तौ अर्वणः अर्वणा अर्वभ्यां सम्मतमेतत् अन्यमते तु अर्वणस्त्रसावनञ इति पाणिनीयसूत्रेण अर्वन्तौ अर्वन्तः इत्यादि ॥

(२) स स देशो जन्मभूमिरेषाम् ।

(३) अयं त्रियूह एव ।

उराह[1]स्तु मनाक् पाण्डुः कृष्णजङ्घो भवेत् यदि ।
सुरूहको[1]ऽगर्दभाभो वोरुखान[1]स्तु पाटलः ॥२०६॥
कुलाह[1]स्तु मनाक् पीतः कृष्णः स्यात् यदि जानुनि ।
उकनाहः[1] पीतरक्तच्छायः(1) स एव तु क्वचित् ॥२०७॥
कृष्णरक्तच्छविः प्रोक्तः शोणः[1] कोकनदच्छविः ।
हरिकः[1] पीतहरितच्छायः स एव हालकः[2] ॥२०८॥
पङ्गुलः[1] सितकाचाभो हलाह[1]श्चित्रितो हयः ।
ययु[1]रश्वोऽश्वमेधीयः[2] प्रोथ[1]मश्वस्य नासिका ॥२०९॥
मध्यं कश्यं निगाल[1]स्तु गलोद्देशः खुराः[1] शफाः[2] ।
अथ पुच्छं वालहस्तो[2] लाङ्गूलं[1] लूम[4](2) वालधिः[5] ॥२१०॥
अपावृत्त[1]-परावृत्त[2]-लुठितानि[3] तु वेल्लिते[4] ।
धोरितं वल्गितं[2] प्लुत[3]मुत्तेजितो[4]त्तेरितानि[5] च ॥२११॥
गतयः पञ्च धारा[1]-ख्या तुरङ्गाणां क्रमादिमाः(3) ।
तत्र धौरितकं[1] धौर्यं[2] धोरणं[3] धोरितं[4] च तत् ॥२१२॥
बभ्रु-कङ्क-शिखि-क्रोड-गतिवत्[1] वल्गितं पुनः ।
अग्रकायसमुल्लासात् कुञ्चितास्यं नतत्रिकम्[2] ॥२१३॥
प्लुतं[1] तु लङ्घनं[2] पक्षि-मृग-गत्य-नुकारकम्[3] ।
उत्तेजितं[1] रेचितं[2] स्यात् मध्यवेगेन या गतिः[4] ॥२१४॥

---

(1) सं उकनाह एव ॥

(2) लूमशब्दो व्यञ्जननकारान्तः लूम लूमनी लूम्नि लूमानि अका-रान्तोऽपीति केचित् तन्मते लूमवालधीत्येकं पदम् लूमं लूमे लूमानि ॥

(3) क्रमात् बभ्र्वादिगतिवत् धौरितकादयो भवन्ति यथा बभ्रु-गतिवत् धौरितकम् ॥

उत्तेरित१ मुपकण्ठ२ मास्कन्दितक३ मित्यपि ।
ऋतु-त्वोत्-प्लुत-गमनं कोपादिवाखिलैः पदैः५ ॥२१५॥
आश्वीनो१ ऽध्वा स यो ऽश्वेन दिनेनैकेन गम्यते ।
कवी१ खलीनं२ कविका३ कवियं४ मुखयन्त्रणम्५ ॥२१६॥
पञ्चाङ्गी१ वक्षपट्टे तु तलिका१ तलसारकम्२ ।
दामाञ्चनं१(१) पादपाशः२ प्रक्षरं१(२) प्रखरः२ समौ ॥२१७॥
चर्मदण्डे१ कशा२ रश्मौ१ वल्गा२-वक्षेपणी३ कुशा४ ।
पर्याणं१ तु पल्ययनं२ वीतं१ फल्गु हयद्विपम् ॥२१८॥
वेसरो१ ऽश्वतरो२ वेगसर३ श्चाथ क्रमेलकः१ ।
कुलनाशः२ शिशुनामा३(३) शलो४ भोलि५ र्मरुप्रियः६ ॥२१९॥
मयो७ महाङ्गो८ वासन्तो९ द्विककु१० द्दुर्गलङ्घनः११ ।
भूतघ्न१२ उष्ट्रो१३ दासेरो१४ रवणः१५ कण्टकाशनः१६ ॥२२०॥
दीर्घग्रीवः१७ केलिकीर्णः१८ करभ१ स्तु त्रिहायणः ।
स तु शृङ्खलकः१ काष्ठमयैः स्यात् पादबन्धनैः ॥२२१॥
गर्दभ१ स्तु चिरमेही२(४) वालेयो३ रासभः४ खरः५ ।
चक्रीवान्६ शङ्कुकर्णो७ ऽथ ऋषभो१ वृषभो२ वृषः३ ॥२२२॥
माहेयः४ सौरभेयो५ भद्रः६ शक्कर७-शाक्करौ८ ।
उक्षा९ ऽनड्वान्१० ककुद्मान्११ गौ१२ र्बलीवर्द१३ श्च शाङ्करः१४ ॥२२३॥

---

(१) पश्चात्पादबन्धनरज्जु ॥
(२) अयं सन्नाहः "प्रक्षरं प्रखरोऽस्त्रियाम्" इति वैजयन्ती ॥
(३) शिशुनामानौ शिशुनामानः ॥
(४) चिरमेहिणौ चिरमेहिणः ॥

उक्षा तु जातो(1) जातोक्षः[1] स्कन्धिकः[1] स्कन्धवाहकः[2] ।
महोक्षः[1] स्याद् वृद्धतरो[2] वृद्धोक्ष[1]स्तु जरद्गवः[2] ॥३२४॥
षण्डतोऽपिच धार्मभ्य[1]कूटो[2]भग्नविषाणकः[2] ।
इट्चरो[1] गोपति[2] षण्डो[3] गोवृषो[4](2) मदकोहलः[5] ॥३२५॥
वत्सः[1] शकृत्करि[2]स्तर्णो[3] दम्य[1]-वत्सतरौ[2] समौ ।
नस्योतो[1] नस्तितः[2] पष्ठवाट्[1] तु स्याद्युगपार्श्वगः[2] ॥३२६॥
युगादीनां तु वोढारो युग्य[1]-प्रासङ्ग्य[2]-शाकटाः[3] ।
स तु सर्वधुरीणः[1] स्यात् सर्वां वहति यो धुरम् ॥३२७॥
एकधुरीणै[1]-कधुरावु[2] भावे कधुरावहे ।
धुरीण[1]धुर्य्य[2]-धौरेय[3]धौरेयक[4]-धुरन्धराः[5] ॥३२८॥
धूर्वहे[1]ऽथ गलि[1]र्दुष्टवृषः शक्तोऽप्यधूर्वहः ।
गौरीशम्ब[2]ष्टवान्तो[1]द्विदन्[2](3) षोडन् द्वि-षट्-रदौ[2] ॥३२९॥
वहः[1] स्कन्धो ऽथकूटं[1] तु ककुदं[2] नैचिकं[1] शिरः ।
विषाणं[1]कूणिका[2] शृङ्गं[3] सास्ना[1] तु गलकम्बलः[2] ॥३३०॥

---

(1) वाहनयोग्यतां प्राप्तः ॥

(2) गोवृषोमदकोहलः इति वा ॥

(3) द्विदन्तो द्विदन्तः, षोडन्तौ षोडन्तः, द्विशब्दात् षट्शब्दाच्च-रदो योज्यते द्विदन् १ द्विरदः २। षोडन् १ षड्रदः २। अन्ये तु दन्तस्य दत्रादेशे कृते षोडन्निति शब्दान्तरं नकारान्तं राजन्शब्दवन्नि-पातयन्ति इति हैमबृहद्वृत्तिः, तदा षोडा षोडानौ षोडानः इत्यादि षोडन् षड्दशनः स्मृतः इति हलायुधः, द्वौ समौ षट्दशना दन्ता यस्य षोडन् स्वार्थे द्वयोरपि प्रज्ञादित्वात् षोडत इति तु तट्टीका तदा देववत् षोडतः षोडतौ षोडताः इत्यादि ॥

गौः[१] सौरभेयी[२] माहेयी[३] मद्रा[४] सुरभि[५]रर्जुनी[६] ।
उस्रा[७]ऽघ्न्या[८] रोहिणी[९] शृङ्गिण्य[१०]नड्वाह्य[११]नडुह्यु[१२]मा[१३]॥२२१॥
तम्पा[१४] निलिम्पिका[१५] तम्बा[१६] सा तु वर्णैरनेकधा ।
प्रष्ठौही[१] गर्भिणी[२] वन्ध्या[१] वशा[२] वेहद्[१](१) वृषोपगा ॥२२२॥
अवतोका[१] स्रवद्गर्भा वृषाक्रान्ता तु सन्धिनी[१] ।
प्रौढवत्सा बष्कयिणी[१] धेनु[१]स्तु नवसूतिका ॥२२३॥
परेष्टु[१]र्बहुसूतिः स्यात् गृष्टिः[१] सकृत्प्रसूतिका ।
प्रजने काल्यो[१]पसर्या[२] सुखदोह्या तु सुव्रता[१] ॥२२४॥
दुःखदोह्या तु करटा[१] बहुदुग्धा तु बञ्जुला[१] ।
द्रोणदुग्धा[१] द्रोणदुघा[२] पीनोध्नी[१] पीवरस्तनी[२] ॥२२५॥
पीतदुग्धा[१] तु धेनुष्या[२] संस्थिता दुग्धबन्धके ।
नैचिकी[१] तूत्तमा गोषु पलिक्नी[१] बालगर्भिणी ॥२२६॥
समांसमीना[१] तु सा या प्रतिवर्षं विजायते ।
स्यादचण्डी तु सुकरा[१] वत्सकामा[१] तु वत्सला[२] ॥२२७॥
चतु-स्त्रे हायणी[१](२) त्र्येका द्वायन्ये[१]कादि-वर्षिका ।
आपीन[१]मूधो[२] गोविट्[१](३) तु गोमयं[२] भूमिलेपनम्[३] ॥२२
तत्र शुष्के तु गोग्रन्थिः[१] करीष[२]-छगणो[२] अपि ।
गवां सर्वं गव्यं[१](४) व्रजे गोकुलं[२] गोधनं[२] धनम्[४] ॥२२९॥

(१) वेहतौ वेहतः स्त्री ॥

(२) चतुर्हायणी १ त्रिहायणी २ गोसंख्या देर्हायनादयवीति णी चतुस्त्रेर्हायनस्य वयसीति णत्वम् १ द्विहायनी १ एकहायनी २ ॥

(३) ऊधसी ऊधांसि, गोविशौ गोविशः ॥

(४) चोरादिकं "गव्यं गोसम्भवं सर्व्वं" मिति हलायुधः ॥

प्रजने[१] स्याद् वृषवरः[२] कोलः[१] पुष्कलकः[२](१) शिवः[३] ।
बन्धनं[१] दाम[२](२) सन्दानं[३] पशुरज्जु स्तु दामनी[१] ॥३४०॥
अजः[१] स्यात् छगल[२] श्छाग[३] श्छगो[४] बस्तः[५] स्तभः[६] पशुः[७] ।
अजा[१] तु छागिका[२] भज्ञा[३] सर्व्वभक्षा[४] गलस्तनी[५] ॥३४१॥
युवाऽजो वर्करो[१]ऽवी[१] तु मेषो[२]-र्णायु[३]रुड्रो[४]-रणाः[५] ।
उरभ्रो[६]मेढ्रको[७]वृष्णि[८]रेडको[९]रोमशो[१०]हुडुः[११] ॥३४२॥
सम्फालः[१२] शृङ्गिणो[१३]भेड्रो[१४] मेषी[१] तु कुररी[२] रुजा[३] ।
जालकिन्य[४]विला[५]वेण्य[६]थ डिकः[१] शिशुवाहकः[२](३) ॥३४३॥
पृष्ठशृङ्गो[३] वनाज[४] स्या दविदुग्धे[१] त्व वेः परम्(४) ।
सोढं[२]दूसं[३]मरीसं[४] च कुक्कुरो[१] वक्रबालधिः[२] ॥३४४॥
अस्थिभु[३]ग्भषणः[४] सारमेयः[५] कौलेयकः[६] शुनः[७] ।
शुनः[८]श्वानो[९]गृहमृगः[१०]कुक्कुरो[११] रात्रिजागरः[१२] ॥३४५॥
रसनालिट्[१३]रतपराः(५) कील[१४]-शायि[१५]-व्रणा[१६]न्दुकाः[१७] ।
शालावृको[१८]मृगदंशः[१९] श्वा[२०]ऽलर्क[१]स्तु स रोगितः ॥३४६॥
विश्वकद्रु[१] स्तु कुशलो मृगव्ये सरमा[१] शुनी[२] ।

---

(१) पुष्कलको गन्धमृगे कीलके क्षपणेऽपि च इति श्रीधरः । पुष्कलक इत्यपि पाठः ॥

(२) दाम दाम्नी दामनी, दामानि क्ली, दामा दामानौ दामानः स्त्री ॥

(३) वनछाग इति यस्य नाम ॥

(४) अविसोढम् १ अविदूसम् २ अविमरीसम् ॥

(५) रतकीलः १ रतशायी २ रतव्रणः ३ रतान्दुकः ४ ॥

विट्चरः[१] सूकरे ग्राम्ये महिषो[१] यमवाहनः[२] ॥३४७॥
रजस्वलो[३] वाहरिपु[४]र्लुलायः[५] (लुलापः) सैरिभो[६] महः[७] ।
धीरस्कन्धः[८] कृष्णशृङ्गो[९] जरन्तो[१०] हंसभीरुकः[११] ॥३४८॥
रक्ताक्षः[१२] कासरो[१३] हंस कालीतनय[१४]-लालिकौ[१५] ।
अरण्यजे ऽस्मिन् गवलः[१] सिंहः[१] कण्ठीरवो[२] हरिः[३] ॥३४९॥
हर्य्यक्षः[४] केसरी[५] भारिः[६] पञ्चास्यो[७] नखरायुधः[८] ।
महानादः[९] पञ्चशिखः[१०] पारिन्द्रः[११] पत्य[१२]-री[१३]मृगात्(१) ॥३५०॥
श्वेतपिङ्गो[१४]ऽथ व्याघ्रो[१] द्वीपी[२] शार्दूल[३]-चित्रकौ[४] ।
चित्रकायः[५] पुण्डरीक[६]स्तरक्षुस्तु मृगादनः[२] ॥३५१॥
शरभः[१] कुञ्जरारातिर्[२] उत्पादको[३] ऽष्टपा[४]दपि ।
गवयः[१] स्याद्वनगवो[२] गोसदृक्षो[३]ऽश्ववारणः[४] ॥३५२॥
खड्गी[१] वाध्रीणसः[२](२) खड्गो[३] गण्डको ऽथ किरः[१] किरिः[२] ।
भूदारः[३] सूकरः[४] क्रोलो[५] वराहः[६] क्रोड[७]-पोत्रिणो[८] ॥३५३॥
घोणी[९] घृष्टिः[१०] स्तब्धरोमा[११] दंष्ट्री[१२] किट्या[१३]-खलाकुलौ[१४] ।
आखनिकः[१५] शिरोमर्मा[१६] स्थूलनासो[१७] बहुप्रजः[१८] ॥३५४॥
भाल्लूके[१] भालूक[२]-च्छ[३]-च्छभल्ल[४]-भल्लूक[५]-भल्लुकाः[६] ।
शृगालो जम्बुकः[२] फेरुः[३] फेरण्डः[४] फेरवः[५] शिवा[६] ॥३५५॥
घोरवासी[७] भूरिमायो[८] गोमायु[९] र्मृगधूर्तकः[१०] ।

(१) पारीन्द्रः इत्यपि इति टीका, सिंहे पारिन्द्र पारिन्द्रौ इति शब्दभेदः, मृगपति २ मृगारिः २ ॥

(२) वाध्रीण नासिकाऽस्य वाध्रीणसः [illegible] गव इति मता देशः ॥

स्याद्गृहगोधिका[1] हालि[2]न्यञ्जनिका[3] हलाहलः[4] ॥२९४॥
स्थूलाञ्जनाधिकायां तु ब्राह्मणी[1] रक्तपुच्छिका[2] ।
कृकलास[1]स्तु सरटः[2] प्रतिसूर्यः[3] शयानकः[4] ॥२९५॥
मूषिको[1] मूषको[2] वज्रदशनः[3] खनको[4]ऽन्दुरौ[5] ।
उन्दुरु[6]र्वृष[7]श्चाखु[8]श्च सूच्यास्यो[9] वृषलोचने[10] ॥२९६॥
छुछुन्दरी[1] गन्धमूष्यां[2] गिरिका[1] बालमूषिका[2] ।
बिडाल[1]श्चोतु[2]र्मार्जारो[3] ह्रीकु[4]श्च वृषदंशकः[5] ॥२९७॥
जाहको[1] गात्रसङ्कोची मण्डली[2] नकुलः[1] पुनः ।
पिङ्गलः[2] सर्पहा[3] बभ्रुः[4] सर्पो[1]ऽहिः[2] पवनाशनः[3] ॥२९८॥

भोगी[4] भुजङ्ग[5]-भुजगा[6]वुरगो[7] द्विजिह्व[8]-
व्यालो[9] भुजङ्गम[10]-सरीसृप[11]-दीर्घजिह्वाः[12] ।
काकोदरो[13] विषधरः[14] फणभृत्[15] पृदाकु[16]
र्वक्रगो[17]-कुण्डलि[18]-बिलेशय[19]-दन्दशूकाः[20] ॥२९९॥

दर्वीकरः[21] कञ्चुकि[22]-चक्रि[23]-गूढ-
पात्[24] पन्नगा[25] जिह्मग[26]-लेलिहानौ[27] ।
कुम्भीनसा[28]-ऽशीविष[29]-दीर्घपृष्ठाः[30]
स्याद्राजसर्प[1]स्तु भुजङ्गभोजी[2] ॥३००॥

चक्रमण्डल्य[1]जगरः[2] पारीन्द्रो[3] वाहसः[4] शयुः[5]
अलगर्दो[1] जलव्यालः[2] समौ राजिल[1]-डुण्डुभौ[2] ॥३०१॥
भवेत्तिलित्सो[1] गोनासो[2] गोनसो[3] घोणसो[4]ऽपि च ।
कुक्कुटाहिः[1] कुक्कुटाभो[2] वर्णेन च रवेण च ॥३०२॥
नागाः[1] पुनः काद्रवेया[2]स्तेषां (भोगवती) भोगावती[1] पुरी ।
शेषो[1] नागाधिपो[2]ऽनन्तो[3] द्विसहस्राक्ष[4] आलुकः[5] ॥३०३॥

स च श्यामोऽथवा शुक्लः सितपङ्कजलाञ्छनः ।
वासुकिस्तु[1] सर्पराजः[2] श्वेतो नीलसरोजवान् ॥३७४॥
तक्षक[1]स्तु लोहिताङ्गः स्वस्तिकाङ्कितमस्तकः ।
महापद्म[1]स्तु शुक्लाङ्गो दशबिन्दुकमस्तकः ॥३७५॥
शङ्ख[1]स्तु पीतो बिभ्राणो रेखां सिन्दुसितां गले ।
कुलिको[1]ऽर्द्धचन्द्रमौलि र्ज्वालाधूमसमप्रभः ॥३७६॥
अथ कम्बला[1] श्वतर[2]-धृतराष्ट्र[3]-बलाहकाः[4] ।
इत्याद्योऽपरे नागा स्तत्तत्कुलसमुद्भवाः ॥३७७॥
निर्मुक्तो[1] मुक्तनिर्मोकः सविषा निर्विषाश्च ते[(1)] ।
नागाः स्युर्दृग्विषा[1]ल्लूमविषा[1]स्तु वृश्चिकादयः ॥३७८॥
व्याघ्रादयो लोमविषा[1] नखविषा[1] नरादयः ।
लालाविषा[1]स्तु लूताद्याः कालान्तरविषाः[1] पुनः ॥३७९॥
मूषिकाद्या दूषीविषं[1] त्ववीर्य मौषधादिभिः[(2)] ।
कृत्रिमं तु विषं चार[1]गर[2]श्चोपविषं[3]च तत् ॥३८०॥
भोगो[2]ऽहिकायो दंष्ट्राऽशी[1(3)] दर्वी[1]भोगः[2]फटः[3]स्फुटः[4] ।
फणो[5]ऽहिकोशे[1]तु निर्ल्वयनी[2]निर्मोक[3]-कञ्चुकाः[4] ॥३८१॥

इत्यहिकायः ।



(१) विषेण सहिताः सर्पा नागादयः निर्विषा अजगरादयः ।

(२) यत् औषध मन्त्रप्रयोगादिभिः अवीर्यं भवति तद्दूषीविष-मित्युच्यते ।

(२) आशिषौ आशिषः स्त्री दन्तालः ।

विहगो[१]विहङ्गम[२]-खगौ[३]पतगो[४]विहङ्गः[५]
शकुनिः[६]शकुन्ति[७]-शकुनौ[८]वि[९]-वयः[१०](१) शकुन्ताः[११] ।
नभसङ्गमो[१२]विकिर[१३]पत्ररथौ[१४]विहायो[१५](२)
द्विज[१६]-पक्षि[१७]-विष्किर[१८]-पतत्रि[१९]-पतत्[२०]त्वतङ्गाः[२१](३) ॥३८२॥
पित्सन्[२२] नीडा[२३]-ण्डजो[२४]ऽगौकाः[२५](४) चञ्चु[१] चञ्चूः[२]सृपा-
टिका[३] ।
त्रोटि[४]श्च पत्रं[१] पतत्रं[२] पिच्छं[३] वाज[४] स्तनूरुहम्[५] ॥३८३॥
पक्षो[६]गरुत्[७]छद[८]श्चापि(५) पक्षमूलं तु पक्षतिः[१] ।
प्रडीनो[१]ड्डीन[२]-सण्डीन[३]-डयनानि[४] नभोगतौ ॥३८४॥
पेशी(६) कोशोऽण्डे[१] कुलायो[१]नीडे[२]केकी[१] तु सर्पभुक्[२] ।
मयूर[३]-बर्हिणौ[४]नीलकण्ठो[५]मेघसुहृ[६]च्छिखी[७] ॥३८५॥
शुक्लापाङ्गो[८]ऽस्य वाक् केका[१]पिच्छं(७) बर्हं[२]शिखण्डकः[३]।
प्रचलाकः[४] कलाप[५]श्च मेचक[१]श्चन्द्रकः[२] समौ ॥३८६॥
वनप्रियः[१]परभृत[२]स्ताम्राक्षः[३] कोकिलः[४] पिकः[५] ।
कलकण्ठः[६]काकपुष्टः[७] काकोऽरिष्टः[२] सकृत्प्रजः[३] ॥३८७॥

---

(१) स्त्रियां वी व्यौ व्यः, नदीवत् विः वी वयः, वयसी वयांसि क्ली ॥

(२) विहायाः विहायसौ विहायसः ॥

(३) पतच्च नान्तः पतन् पतन्तौ पतन्तः ॥

(४) नीड़जः १ अण्डजः २ नगौकाः सान्तः ॥

(५) गरुतौ गरुतः पुं गरुती गरुन्ति क्ली ॥

(६) पेशी १ कोशः २ अण्डः ३ नामत्रयमित्यन्ये ॥

(७) पिच्छमिति विशेषणं तेन बर्हादि पञ्चार्थैव नामानीत्यन्ये ॥

आत्मघोष[4] श्चिरजीवी[5] घूकारि:[6] करटो[7] द्विकः[8] ।
एकदृग्[9] बलिभुग्[10] ध्वाङ्क्षो मौकुलि[12] र्वायसो[13] ऽन्यभृत्[14](1) ॥३८८॥
वृद्ध-द्रोण-दग्ध-कृष्ण-पर्व्वते-भ्य स्समौ[5] परः(2) ।
पवनाश्रय[6] श्च काकोलो[7] मद्गु[1] स्तु जलवायसः[2] ॥३८९॥
घूके[1] निशाटः[2] काकारिः[3] कौशिको[4] लूक[5]-पेचकाः[6] ।
दिवान्धो[1] ऽथ निशावेदी[1] कुक्कुट[2] श्चरणायुधः[3] ॥३९०॥
कृकवाकु[4] स्ताम्रचूडो[5] विष्टताक्षः[6](3) शिखण्डिकः[7] ।
हंसा[1] श्चक्राङ्ग[2]-वक्राङ्ग[3]-मानसौकः[4]-सितच्छदाः[5] ॥३९१॥
राजहंसा[1] स्त्वमी चञ्चुचरणैरतिलोहितैः ।
मल्लिकाक्षा[1](4) स्तु मलिनै र्धार्त्तराष्ट्राः[1] सिते-तरैः ॥३९२॥
कादम्बा[1] स्तु कलहंसाः[2] पक्षैः स्यु रतिधूसरैः ।
वारला[1] वरला[2] हंसी[3] वारटा[4] वरटा[5] च सा ॥३९३॥
दार्व्वाघाटः[1] शतपत्रः[2] खञ्जरीट[1] स्तु खञ्जनः[2] ।
सारस[1] स्तु लक्ष्मणः[2] स्यात् पुष्कराख्यः[3] कुरङ्करः[4] ॥३९४॥
सारसी[1] लक्ष्मणा[2] ऽथ क्रुङ्[1](5) क्रौञ्चे[2] चापे[1] किकीदिविः[2] ॥

---

(१) अन्यभृतौ अन्यभृतः ॥

(२) वृद्धकाकः १ द्रोणकाकः २ दग्धकाकः ३ कृष्णकाकः ४ पर्व्वतकाकः ५ ॥

(३) विष्टते अक्षिणी अस्य विष्टताक्षः इति टीका ॥

(४) मल्लिकाकारे अक्षिणी एषां मल्लिकाक्षाः शुक्लापाङ्गत्वात् इति टीकाकृतः ॥

(५) क्रुञ्चौ क्रुञ्चः ॥

चातकः[1] स्तोकको[2] बप्पीहः[3] सारङ्गो[4] नभोम्बुपः[5] ॥३९५॥
चक्रवाको[1] रथाङ्गाह्वः[2] कोको[3] द्वन्द्वचरो[4]ऽपि च ।
टिट्टिभ[1]स्तु कटुक्वाण[2] उत्पादशयन[3]श्च सः ॥३९६॥
चटको[1] गृहबलिभुक्[2] कलविङ्कः[3] कुलिङ्ककः[4] ।
तस्य योषित्तु चटका[1] स्त्र्य-पत्ये चटका[1] तयोः ॥३९७॥
पुमपत्ये चाटकैरो[1] दात्यूहः[1] कालकण्टकः[2](१) ।
जलरङ्कु[3]र्जलरङ्को[4] बको[1] कह्वो[2] बकोट[3]-वत् ॥३९८॥
बलाहकः[1] स्याद्बलाको बलाका[1] विसकण्ठिका[2] ।
भङ्गः[1]कलिङ्गो[2]धूम्याटः[3]कङ्क[1]स्तु कमनच्छदः[2] ॥३९९॥
लोहपृष्ठो[3] दीर्घपादः[4] कर्कटः[5] स्कन्धमल्लकः[6] ।
चिल्लः[1]शकुनि[2]रातापी[3]श्येनः[1]पत्री[2] शशादनः[3] ॥४००॥
दाक्षाय्यो[1]दूरदृक्[2]गृध्रो[3]ऽथोत् क्रोशो[1]मत्स्यनाशनः[2] ।
कुररः[3]कीर[1]स्तु शुको[2]रक्ततुण्डः[3]फलादनः[4] ॥४०१॥
शारिका[1] तु पीतपादा[2]गोराटी[3] गोकिराटिका[4] ।
स्याच्चर्मचटिकायां[1] तु जतुका[2]ऽजिनपत्रिका[3] ॥४०२॥
वल्गुलिका[1] मुखविष्ठा[2] परोष्णी[3] तैलपायिका[4] ।
कर्करेटुः[1]करेटुः[2]स्यात् करटुः[3]कर्कराटुकः[4] ॥४०३॥
आटि[1]राटिः[2]शरारिः[3] स्यात् ककण[1]-ककरौ[2] समौ(२) ।

---

(१) कालाः कण्टका रोमोद्भेदोऽस्य कालकण्टकः कालः कण्ठोऽस्य कालकण्ठ इत्यन्ये। ग्रन्थभेदे तु "जलरङ्को जलरङ्कः कालात्-कण्टक कण्टकौ" इति ॥

(२) गौरतित्तिरिः इत्यस्य टीका, शब्दरत्नाकरे तु ककणाककरौ उभौ कपिञ्जले इति ॥

भासे[१] शकुन्तः[२] कोयष्टौ[१] शिखरी[२] जलकुक्कुभः[३] ॥४०४॥
पारापतः[१] कलरवः[२] कपोतो[३] रक्तलोचनः[४] ।
ज्योत्स्नाप्रिये[१] चलचञ्चु[२]-चकोर[३]-विषसूचकाः[४] ॥४०५॥
जीवंजीव[१]स्तु गुन्द्रालो[२] विषदर्शनमृत्युकः[३] ।
व्याघ्राट[१]स्तु भरद्वाजः[२] प्लव[१]स्तु गात्रसंप्लवः[२] ॥४०६॥
तित्तिरि[१]स्तु खरकोणो[२] हारीत[१]स्तु मृदङ्कुरः[२] ।
कारण्डव[१]स्तु मल्लः[२] सुगृह[१]श्चञ्चुसूचिकः ॥५०७॥
कुम्भकारकुक्कुट[१]स्तु कुक्कुभः[२] कुहकस्वनः[३] ।
पक्षिणा येन गृह्णन्ति पक्षिणो ऽन्ये स दीपकः[१] ॥४०८॥
छेका[१] गृह्या[२]श्च ते गेहासक्ता ये मृगपक्षिणः ।

इति पञ्चेन्द्रियाः ।



मत्स्यो[१] मीनः[२] पृथुरोमा[३] झषो[४] वैसारिणो[५] ऽण्डजः[६] ॥४०९॥
सङ्घचारी[७] स्थिरजिह्व[८] आत्माशी[९] स्वकुलक्षयः[१०] ।
विसारः[११] शकली[१२] शल्की[१३] शम्बरो[१४] ऽनिमिष[१५]स्तिमिः[१६] ॥४१०॥
सहस्रदंष्ट्र[१] वादालः[२] पाठीने[१] चित्रवल्लिकः[२] ।
शकुले[१] स्यात् कलको[२] ऽथ गडकः[१] शकुलार्भकः[२] ॥४११॥
उलूपी[१] शिशुके[२] प्रोष्ठी[१] शफरौ[२] श्वेतकोलके[३] ।
नलमीन[१]श्चिलिचिमो[२] मत्स्यराज[१]स्तु रोहितः[२] ॥४१२॥
मद्गुर[१]स्तु राजशृङ्गः[२] शृङ्गी[१] तु मद्गुरप्रिया[२] ।
क्षुद्राण्डमत्स्यजातं तु पोताधानं[१] जलाणुकम्[२](१) ॥४१३॥

(१) अत्रैव पठति जलाणुकं कश्चिदिति टीका ॥

महामत्स्या[1]स्तु चीरल्लि तिमिङ्गिलगिलादयः ।
अथ यादांसि[1] नक्राद्या हिंसका जलजन्तवः ॥४१४॥
नक्रः[1] कुम्भीर[2]नालास्यः[3]कुम्भी[4]महामुखो[5]ऽपि च ।
तालुजिह्वः[6]शङ्कुमुखो[7]गोमुखो[8] जलसूकरः[9] ॥४१५॥
शिशुमार[1] स्त्वम्बुकूर्म्म[2] उष्णवीर्य्यो[3] महावसः[4] ।
उद्र[1]स्तु जलमार्जारः[2] पानीयनकुलो[3] वसी[4] ॥४१६॥
ग्राहे[1] तन्तु[2] स्तन्तुनागो[3]ऽवहारो[4]नाग[5] तन्तुणौ[6] ।
अन्येपि यादोभेदाः स्यु र्वंश्वमो मकरादयः[1] ॥४१७॥
कुलीरः[1] कर्कटः[2] पिङ्गचक्षुः[3] पार्श्वोदरप्रियः[4] ।
द्विधागतिः[5]षोड़शांह्रिः[6] कुरचिल्लो[7] बहिश्चरः[8] ॥४१८॥
कच्छपः[1] कमठः[2] कूर्म्मः[3] क्रोडपाद[4] श्चतुर्गतिः[5] ।
पञ्चाङ्गगुप्त[6]-दौलेयौ[7]जीवथः[8]कच्छपी[1] डुली[2] ॥४१९॥
मण्डूके[1] हरि[2]-शालूर[3]प्लव[4] भेक[5]-प्लवङ्गमाः[6] ।
वर्षाभूः[7]प्लवगः[8]शालुर[9]-जिह्म[10]-व्यङ्ग[11]-दर्दुराः[12]॥४२०॥
स्थले नराद्यो ये तु ते जले जलपूर्व्वकाः[1(1)] ।
अण्डजाः[1]पक्षिसर्पाद्याः[1]पोतजाः[1(2)] कुञ्जरादयः[2]॥४२१॥
रसजाः[1(3)] मद्यकीटाद्या[2]र्नृगवाद्या जरायुजाः[4] ।

---

(१) जलशब्दः पूर्व्वे येषां यथा जलनरः जलहस्ती जलतुरगः एवं अम्बुनरः तोयकरी नीरघोटक इत्यादि ॥

(२) पोतो नाम जरायुरहितो गर्भः आदिनाश्वाविच्छशमार्जारिकाद्याः ॥

(३) रसाज्जायन्ते इति रसजाः आदिना घृतकीटाद्याः ॥

यूकाद्याः स्वेदजा[5] मत्स्यादयः सम्मूर्च्छनोद्भवाः[6](1) ॥४२२॥
खञ्जना भूरुद्भिदो[7](2) ऽथोपपादुका[1] देवनारकाः ।
लक्षयोनय इत्यष्टा(3) वुद्भि[1]रुद्भिज्ज[2]मुद्भिदम्[3] ॥४२३॥

इत्याचार्य्य श्रीहेमचन्द्रविरचितायामभिधानचिन्तामणौ
नाममालायां तिर्य्यक्काण्डश्चतुर्थः ॥ ४ ॥



## अथ नरककाण्डः ।

सुनारका[1]स्तु परेत[2]-प्रेत[3]-याम्या[4]-तिवाहिकाः[5] ।
आजू[1]र्विष्टि[2]र्यातना[1] तु कारणा[2] तीव्रवेदना ॥१॥
नरक[1]स्तु नारकः[2] स्यान्निरयो[3] दुर्गति[4]श्च सः ।
घनोदधि[1](4)-घनवात[2]-तनुवात[3]-नभः[4]-स्थिताः ॥२॥
रत्न-शर्करा-वालुका-पङ्क-धूम-तमः-प्रभाः[6](5) ।

---

(१) सम्मूर्च्छनादुद्भवो येषां सम्मूर्च्छजा इत्यर्थः आदिना सर्पादयो गृह्यन्ते ॥

(२) उद्भिदति भुवमिति क्विपि उद्भिदः खञ्जनादन्येऽपि शल-भादयः, उपपद्यन्ते स्वयमिति एवं शीलाः उपपादुकाः ॥

(३) लक्षाणां जीवानां योनयः उत्पत्तिस्थानानि अष्टावण्डजा-दयः ॥

(४) घननिविड उदधिः । एवं घनश्चासौ वातश्च । तनुश्चासौ वातश्च । नभः आकाशः । घनोदध्यादिषु प्रत्येकमवस्थिताः क्रमात् पृथुतराः अधोऽधो रत्नप्रभाद्याः सप्तनरकभूमयो भवन्ति ॥

(५) रत्नप्रभा १ शर्कराप्रभा २ वालुकाप्रभा ३ पङ्कप्रभा ४ धूम-प्रभा ५ तमःप्रभा ६ क्रमेण रत्नप्रभाद्यासु सप्तनरकभूमिषु नरकावास संख्यामाह अथेति ॥

महातमःप्रभा[७] चेत्यधो ऽधो नरकभूमयः[१] ॥ ३ ॥
क्रमात् पृथुतरा सप्ता[(१)] ऽथ त्रिंशत्पञ्चविंशतिः[(२)] ।
पञ्चदश दश त्रीणि लक्षाण्यूनं च पञ्चभिः ॥४॥
लक्षं पञ्च च[(३)] नरकावासाः सीमन्तकादयः ।
एतासु[(४)] स्युः क्रमेणाथ पातालं[१] वड़वामुखम् ॥५॥
बलिवेश्मा[२] धोभुवनं[३] नागलोको[४] रसातलम्[५] ।
रन्ध्रं[१] बिलं[२] निर्व्यथनं[३] कुहरं[४] शुषिरं[५] शुषिः[६] ॥६॥
छिद्रं[७] रोपं[८] विवरं[९] च निम्नं[१०] रोकं[११] वपा[१२] स्मरम्[१३] ।
गर्त्त[१]-श्वभ्रा[२]-वटा[३]-गाध[४]-दरा[५]स्तु विवरे भुवः ॥ ७॥

इत्याचार्य्य श्रीहेमचन्द्रविरचितायामभिधानचिन्तामणौ नाममालायां नरककाण्डः पञ्चमः ॥ ५ ॥



## अथ सामान्यकाण्डः ।

स्या ल्लोको[१] विष्टपं[२] विश्वं[३] भुवनं[४] जगती[५] जगत्[६] ।
जीवाजीवाधारक्षेत्रं लोको[१] ऽलोको[१] स्ततो ऽन्यथा ॥१॥
क्षेत्रज्ञ[१] आत्मा[२] पुरुष[३] श्चेतनः[४] स पुन र्भवी[१(५)] ।

(१) रत्नप्रभायाम् ॥

(२) शर्कराप्रभायाम् ॥

(३) बालुकाप्रभायां पंकप्रभायां तमःप्रभायां महातमःप्रभायाम् ॥

(४) एतासु रत्नप्रभादिषु सप्तसु नरकभूमिषु क्रमेण उक्तसंख्यकाः सीमन्तकादयो नरकावासा भवन्ति । सीमन्तकोनाम रत्नप्रभा पृथिवी मध्यवर्त्ती नरकेन्द्रः ॥

(५) भविनो भविनः ॥

जीवः[2] स्यादसुमान्[3] सत्त्वं[4] देहभृ[5]-ज्जन्तु[6]-जन्तवः[7] ॥२॥
उत्पत्ति[1] र्जन्म[2](1) जनुषी[3] जननं[4] जनि[5] रुद्भवः[6]।
जीवे[1]ऽसु[2]-जीवित[3]-प्राणा[4] जीवातु[1] र्जीवनौषधम्[2] ॥३॥
श्वास[1]स्तु श्वसितं[2] सोऽन्तर्मुख उच्छ्वास[1] आहरः[2]।
आनो[3]बहिर्मुख स्तु स्या न्निःश्वासः[1]पान[2] एतनः[3] ॥४॥
आयु[1] र्जीवितकालो[2]ऽन्तःकरणं[1] मानसं[2] मनः[3]।
हृ[4]च्चेतो[5]हृदयं[6]चित्तं[7] स्वान्तं[8](2) गूढपथो[9]-च्चले[10] ॥५॥
मनसः कर्म सङ्कल्पः[1] स्या दथो शर्म[1] निर्वृतिः[2]।
सातं[3] सौख्यं[4] सुखं[5] दुःखं[1] त्व सुखं[2] वेदना[3]व्यथा[4] ॥६॥
पीडा[5]बाधा[6]र्त्तिरा[7]भीलं[8] कृच्छ्रं[9] कष्टं[10] प्रसूतिजम्[11]।
आमनस्यं[12] प्रगाढं[13] च स्या दाधि[1] र्मानसी व्यथा ॥७॥
सपत्नाकृति[1]-निष्पत्राकृती[2] त्व त्यन्तपीडने।
क्षु[1] ज्जाठराग्निजा पीडा व्यापादो[1] द्रोहचिन्तनम् ॥८॥
उपज्ञा[1] ज्ञान माद्यं स्या च्चर्चा[1] सङ्ख्या[2] विचारणा[3]।
वासना[1] भावना[2] संस्कारो[3]ऽनुभूताद्यविस्मृतिः ॥९॥
निर्णयो[1] निश्चयो[2]ऽन्तः सम्प्रधारणा[1] समर्थनम्[2](3)।
अविद्या[1]ऽहम्मत्य[2]-ज्ञाने[3]र्भ्रान्ति[1]र्मिथ्यामति[2]र्भ्रमः[3] ॥१०॥
सन्देह[1]-द्वापरा[2]-रेका[3] विचिकित्सा[4]च संशयः[5]।
परभागो[1]गुणोत्कर्षो[2]दोषे[1]त्वा दीनवा[2]-स्रवौ[3] ॥११॥

---

(१) जन्म मान्तोऽदन्तश्च ॥
) स्वान्तमित्यपि पाठः ॥
) युक्तायुक्तपरीक्षायाः ॥

स्यात् रूपं[1] लक्षणं[2] भाव[3]श्चात्म[4]-प्रकृति[5]-रीतयः[6] ।
सहजो[7] रूपतत्त्वं[8] च धर्म्म[9] सर्गौ[10] निसर्ग[11]-वत् ॥१२॥
शीलं[12] सतत्त्वं[13] संसिद्धि[14]रवस्था[1] तु दशा[2] स्थितिः[3] ।
स्नेहः[1] प्रीतिः[2] प्रेम[3]-हार्दं[4] दाक्षिण्यं[1] त्वनुकूलता[2] ॥१३॥
विप्रतिसारो[1] ऽनुशयः[2] पश्चात्तापो[3]ऽनुताप[4] श्च ।
अवधान[1]-समाधान[2]-प्रणिधानानि[3] तु समाधौ[4] स्युः ॥१४॥
धर्म्मः[1] पुण्यं[2] वृषः[3] श्रेयः[4]-सुकृते[5] नियतौ[1] विधिः[2] ।
दैवं[3] भाग्यं[4] भागधेयं[5] दिष्टं[6]चा ऽयः[1] स्तु तच्छुभम् ॥१५॥
अलक्ष्मी[1] र्निर्ऋतिः[2] कालकर्णिका[3] स्या दशा ऽशुभम्[1] ।
दुःकृतं दुरितं[3] पाप[4]मेनः[5] पाप्मा[6] च पातकम्[7] ॥१६॥
किल्बिषं[8] कलुषं[9] किण्वं[10] कल्मषं[11] वृजिनं[12] तमः[13] ।
अंहः[14] कल्क[15]मघं[16] पङ्क[17] उपाधि[1]र्धर्म्मचिन्तनम्[2] ॥१७॥
त्रिवर्गो[1] धर्म्म-कामा-र्था श्चतुर्वर्गः[1] समोक्षकाः ।
बलतुर्य्या(1) श्चतुर्भद्रं[1] प्रमादो[1]ऽनवधानता[2] ॥१८॥
(२)छन्दो[1] ऽभिप्राय[2] आकूतं[3] मत[4]-भावा[5]-शया[6] अपि ।
हृषीक[1]मक्षं[2] करणं[3] स्रोतः[4] खं[5] विषयी[6] न्द्रियम्[7] ॥१९॥
बुद्धीन्द्रियं[1] स्पर्शनादि पाण्यादि तु क्रियेन्द्रियम्[1] ।
स्पर्शादय स्त्विन्द्रियार्था[1] विषया[2] गोचरा[3] अपि ॥२०॥
शीते[1] तुषारः[2] शिशिरः[3] सुशीम.[4](३) शीतलो[5] जडः[6] ।

---

(१) बलं तुर्य्यं येषां ते धर्म्मकामार्थबलानीत्यर्थः ॥

(२) छन्दो देववत् ॥

(३) सुषीमः मूर्द्धन्यमध्योऽपि ॥

हिमो[७]ऽथोष्णं[१] तिग्म[२]स्तीव्र[३]स्तीक्ष्णं[४] चण्डः[५] खरः[६] पटुः[७] ॥२१॥
कोष्णः[१] कवोष्णः[२] कदुष्णो[३] मन्दोष्णं[४] चेषदुष्ण[५]-वत् ।
निष्ठुरः[१] कक्खटः[२] क्रूरः[३] परुषः[४] कर्कशः[५] खरः[६] ॥२२॥
दृढः[७] कठोरः[८] कठिनो[९] जरठः[१०](१) कोमलः[१] पुनः ।
मृदुलो[२] मृदु[३]सोमाल[४]-सुकुमारा[५] अकर्कशः[६] ॥ २३ ॥
मधुर[१]स्तु रसज्येष्ठो[२] गुल्यः[३] स्वादु[४]र्मधूलकः ।
अम्ल[१]स्तु पाचनो[२] दन्तशठो[३]ऽथ लवणः[१] सरः[२] ॥२४॥
सर्व्वरसो[३]ऽथ कटुः[१] स्याद्दीपनो[२] मुखशोधनः[३] ।
वक्रभेदी[१] तु तिक्तो[२]ऽथ कषाय[१]स्तु वरो[२] रसाः[१] ॥२५॥
गन्धो[१] जनमनोहारी[२] सुरभि[१]र्घ्राणतर्पणः[२] ।
समाकर्षी[३] निर्हारी[४] च स आमोदो[१] विदूरगः ॥२६॥
विमर्दोत्थः परिमलो[१]ऽथामोदी[१] मुखवासनः[२] ।
इष्टगन्धः[३] सुगन्धि[४]श्च दुर्गन्धिः[१] पूतिगन्धिका[२] ॥२७॥
आमगन्धि[१]स्तु विस्रं[२] स्याद्वर्णाः[१] श्वेतादिका अमी ।
श्वेतः[१] श्येतः[२] सितः[३] शुक्लो[४] हरिणो[५] विशदः[६] शुचिः[७] ॥२८॥
अवदात[८]-गौर[९]-शुभ्र[१०]-वलक्ष[११]-धवला[१२]-र्जुनाः[१३] ।
पाण्डुरः[१४] पाण्डरः[१५] पाण्डु[१६]रीषत्पाण्डु स्तु धूसरः[१] ॥२९॥
कापोत[१]स्तु कपोताभः[२] पीत[१]स्तु सितरञ्जनः[२] ।
हारिद्रः[३] पीतलो[४] गौरः[५] पीतनीलः[१] पुन र्हरित्[२] ॥३०॥
पालाशो[३] हरित[४] स्तालकाभो[५] रक्त[१]स्तु रोहितः[२] ।
माञ्जिष्ठो[३] लोहितः[४] शोणः[५] श्वेतरक्त[१]स्तु पाटलः[२] ॥३१॥

(१) जरटः इत्यपि ॥

अरुणो[१] बालसन्ध्याभः पीतरक्त[१]स्तु पिञ्जरः[२] ।
कपिलः[३] पिङ्गलः[४] श्यावः[५] पिशङ्गः[६] कपिशो[७] हरिः[८] ॥३२॥
बभ्रुः[९] कद्रुः[१०] कडार[११]श्च पिङ्ग[१२] कृष्ण[१]स्तु मेचकः[२] ।
स्याद्रामः[३] श्यामलः[४] श्यामः[५] कालो[६] नीलो[७]ऽसितः[८] शितिः[९] ॥३३॥
रक्तश्यामे[१] पुन र्धूम्र[२]-धूमला[३] वथ कर्बुरः[१] ।
किर्मीर[२] एतः[३] शबल[४] श्चित्र[५]-कल्माष[६]-चित्रलाः[७] ॥३४॥
शब्दो[१] निनादो[२] निर्घोषः[३] स्वानो[४] ध्वानः[५] स्वरो[६] ध्वनिः[७] ।
निर्ह्रादो[८] निनदो[९] ह्रादो[१०] निस्वानो[११] निस्वनः[१२] स्वनः[१३] ॥३५॥
रवो[१४] नादः[१५] स्वनि[१६]र्घोषः[१७] सं[१८]-व्याङ्भ्यो[१९] राव[२०] आरवः[२१](१)
क्वणनं[२२] निक्वणः[२३] क्वाणो[२४] निक्वाण[२५]श्च क्वणो[२६] रणः[२७] ॥३६॥
षड्ज[१]-ऋषभ[२]-गान्धारा[३] मध्यमः[४] पञ्चम[५]स्तथा ।
धैवतो[६] निषधः[७] सप्त तन्त्रीकण्ठोद्भवाः स्वराः ॥३७॥
ते(२) मन्द्र[१]-मध्य[२]-ताराः[३] स्यु रुरः[१]-कण्ठ[२]-शिरो[३] भवाः ।
रुदितं[१] क्रन्दितं क्रुष्टं[२] तद ऽपुष्टं तु गद्गदः[१] ॥३८॥
शब्दो गुणानुरागोत्थ प्रणादः[१] सीत्कृतं[२] नृणाम् ।
पर्दनं[१] गुदजे शब्दे कर्दनं[१] कुक्षिसम्भवे ॥३९॥
क्ष्वेडा[१] तु सिंहनादो[२]ऽथ क्रन्दनं[१] सुभटध्वनिः ।
कोलाहलः[१] कलकल[२]स्तु मुलो[१] व्याकुलो रवः ॥४०॥

---

(१) संरावः १ विरावः २ आरावः ३ ॥

(२) ते ऋषभादयः सप्तस्वराः प्रत्येकं उरः कण्ठशिरोभवाः सन् मन्द्रमध्य ताराः स्युः यद्दन्तिलः "नृणामुरसि मन्द्रस्तु द्वाविंशतिविध ध्वनिः । स एव कण्ठे मध्यः स्यात् तारः शिरसि गीयते" इति ।

मर्म्मरो[१] वस्त्र-पर्णादेर्भूषणानां तु शिञ्जितम्[१]।
हेषा[१] ह्रेषा[२] तुरङ्गाणां गजानां गर्ज्जो[१] बृंहितं[२] ॥४१॥
विस्फारो[१] धनुषां हम्भा[१]-रम्भे[२] गोर्जलदस्य तु।
स्तनितं[१] गर्ज्जितं[२] गर्ज्जिः[३] स्वनितं[४] रसिता[५]-दि च ॥४२॥
कूजितं[१] स्याद्विहङ्गानां तिरश्चां रुत[१]-वाशिते[२]।
वृकस्य रेषणं[१] रेषा[२] बुक्कनं[१] भषणं[२] शुनः ॥४३॥
पीडितानां(१) तु कणितं[१] मणितं[१] रतकूजितम्(२)।
प्रक्वाणः[१] प्रक्वणः[२] स्तन्त्र्या मर्द्दलस्य तु गुन्दलः[१] ॥४४॥
चीजनं[१] तु कीचकानां भेर्य्या नादस्तु दर्दुरः[१]।
तारो[१]ऽत्युच्चैर्ध्वनिर्मन्द्रो[१] गम्भीरो मधुरः कलः[१] ॥४५॥
काकली[१] तु कलः सूक्ष्म एकतालो[१] लयानुगः(३)।
काकु[१]र्ध्वनिविकारः स्यात्प्रतिश्रुत्[१] प्रतिध्वनिः[२] ॥४६॥
सङ्घाते[१] प्रकरौ[२]-घ[३]-वार[४]-निकर[५]-व्यूहाः[६] समूह[७] चयः[८]
सन्दोहः[९] समुदाय[१०]-राशि[११]-विसराः[१२] व्राताः[१३] कलापो[१४] व्रजः[१५]।
कूटं[१६] मण्डल[१७] चक्रवाल[१८] पटल[१९]-स्तोमा[२०] गणाः[२१] पेटकं[२२]
वृन्दं[२३] चक्र[२४]-कदम्बके[२५] समुदयः[२६] पुञ्जोत्[२७] करौ[२८] संहतिः[२९] ॥४७॥
समवायो[३०] निकुरम्बं[३१] जालं[३२] निवह[३३]-सञ्चयौ[३४]।

---

(१) व्याधिप्रहारादिभिः पीड़ितानाम्॥

(२) रतौ सुरते दम्पत्योः कूजितम् अव्यक्तशब्दः॥

(३) अभिन्नकालमानशब्दस्य॥

जातं१ तिरश्चां तद्यूथं१ सङ्घः१ सार्थो२ तु देहिनाम् ॥४८॥
कुलं१ तेषां सजातीनां निकाय१स्तु सधर्मिणाम् ।
वर्ग१स्तु सदृशां स्कन्धो१ नरकुञ्जरवाजिनाम् ॥४९॥
ग्रामो१ विषय-शब्दास्त्र-भूतेन्द्रिय-गुणाद्व्रजे(१) ।
समज१स्तु पशूनां स्यात् समाज१स्त्वन्यदेहिनाम् ॥५०॥
शुकादीनां गणे शौक१-मायूर१-तैत्तिरा१-दयः ।
भिक्षादेर्भैक्ष१साहस्र१-गार्भिण१-यौवता१-दयः ॥५१॥
गोत्रार्थप्रत्ययान्तानां स्युरौपगवका१-दयः(२) ।
उक्षादेरौक्षकं१ मानुष्यकं१ वार्द्धकमौष्ट्रकम्१ ॥५२॥
स्याद्राजपुत्रकं१ राजन्यकं१ राजक१ माजकम्१ ।
वात्सकौ१रभ्रके१ कावचिकं१ कवचिना मपि ॥५३॥
हास्तिकं१ तु हस्तिनां स्या दापूपिका१-द्यचेतसाम् ।
धेनूनां धैनुकं१ धेन्वन्तानां(३) गौधेनुका१-दयः ॥५४॥
कैदारकं१ कैदारिकं२ कैदार्य२मपि तद्गणे ।
ब्राह्मणादे र्ब्राह्मण्यं२ माणव्यं२ वाडव्य२मित्यपि ॥५५॥
गणिकानां तु गाणिक्यं१ केशानां कैश्य१-कैशिके२ ।

---

(१) विषयग्रामः १ शब्दग्रामः १ अस्त्रग्रामः १ भूतग्रामः १ इन्द्रियग्रामः १ गुणग्रामः १॥

(२) उपगोरपत्यानि औपगवाः तेषां वृन्दम् औपगवकम् आदिना गार्गकम् इत्यादयः ।

(३) धेनुशब्दोऽन्ते धेन्वन्ता तेषां गोशब्दः सामान्येन सौरभीपर्यायः धेनुशब्दस्तु "धेनुस्तु नवसूतिका इत्युक्तत्वात्" नवप्रसूतगोपर्यायः अतः गोधेनूनां वृन्दं गौधेनुकम् आदिना सौरभीधेनुकम् इत्यादि ।

अश्वानामाश्व[1]मश्वीयं[2] पशूनां पार्शव[1] मप्यथ ॥५६॥
वातूल[1]-वात्ये वातानां गव्या[1]-गोत्रे[2] पुनर्गवाम् ।
पाश्या[1][(1)]-खल्या[1]-दि पाशादेः खलादेः खलिनी[2]-निभाः॥५७॥
जनता[1] बन्धुता[1] ग्रामता[1] गजता[1] सहायता[1] ।
जनादीनां रथानां तु स्याद्रथ्या[1] रथकड्या[2][(2)] ॥५८॥
राजि[1]र्लेखा[2] तति[3]र्वीथि[4]र्माला[5]ऽऽल्या[6]-वलि[7]-पङ्क्तयः[8] ।
धोरणी[9] श्रेण्यु[10]भौ तु द्वौ[1] युगलं[1] द्वितयं[2] द्वयम्[3] ॥५९॥
युगं[4] द्वैतं[5] यमं[6] द्वन्द्वं[7] युग्मं[8] यमल[9]-यामले[10] ।
पशुभ्यो[1] गोयुगं[1] युग्मे परं षट्त्वे तु षड्गवम्[1][(3)]॥६०॥
परःशताद्या[1]-स्ते येषां परा सङ्ख्या शतादिकात्[(4)] ।
प्राज्यं[1] प्रभूतं[2] प्रचुरं[3] बहुलं[4] बहु[5] पुष्कलम्[6] ॥६१॥

---

(१) गल्या इति पाठः, गलो ह्रहत्काशस्तेषां समूहः ॥

(२) रथकड्याया इति वा ॥

(३) ह्वित्वे गोयुगः। षट्त्वे षड्गवः। इति द्वे सूत्रे। गोयुगमिति कृत्सृत्तयात्मकः प्रत्ययः पशुनामभ्यः परं अर्थे युग्मे वाच्ये गोयुगशब्दः प्रयुज्यते यथा गो गोयुगं गोशब्दस्योभयार्थत्वात् अश्वगोयुगम् उष्ट्रगोयुगं हस्तिगोयुगम् इत्यादि। एवं षट्त्वे वाच्ये षड्गवमित्यखण्डः प्रत्ययः गोषड्गवम् अश्वषड्गवं हस्तिषड्गवमित्यादि पूर्ववदित्येके ॥

(४). शतमादिर्यस्य तत् शतादिकं तस्मात् शतादिकात्। येषां संख्येयानां गजादीनां शतात् परा ऊर्द्ध संख्या ते परः शताः आदिना परः सहस्राः परो लक्षाः इत्यादि, परः शतादिरिति सूत्रेण पञ्चमीतत्पुरुषसमासे साधवः परशब्दस्य पूर्व्वनिपातः सकारागमस्य निपातनात् परशब्देन समासार्थः परम् शब्दः सकारान्तोप्यस्तीत्यन्ये ॥

भूयिष्ठं[7] पुरुहं[8] भूयो[9] भूय्यं[10] दभ्रं[11] पुरु[12] स्फिरम्[13] ।
स्तोकं[1] क्षुल्लं[2] तुच्छ[3]मल्पं[4] दभ्रा[5]-णु[6]तलिनानि[7] च ॥६२॥
तनु[7] क्षुद्रं[9] कृशं[10] सूक्ष्मं[1] पुनः श्लक्ष्णं[2] च पेलवम्[3] ।
त्रुटौ[1](1) मात्रा[2] लवो[3] लेशः[4] कणो[5] ह्रस्वं[1] पुन र्लघु[2] ॥६३॥
अत्यल्पे[1]ऽल्पिष्ठ[2]मल्पीय[3]कनीयो[4](2) ऽणीय[5] इत्यपि ।
दीर्घा[1]यते[2] समे तुङ्ग[1] मुच्च[2]मुन्नत[3] मुद्धुरम्[4] ॥६४॥
प्रांशू[5]च्छ्रित[6]मुदग्रं[7] च न्यग्[1] नीचं[2] ह्रस्व[3]-मन्थरे[4] ।
खर्वं[5] कुब्जं[6] वामनं[7] च विशालं[1] तु विसङ्कटम्[2] ॥६५॥
पृथू[3] रु[4] पृथुलं[5] व्यूढं[6] विकटं[7] विपुलं[8] बृहत्[9] ।
स्फारं[10] वरिष्ठं[11] विस्तीर्णं[12] ततं[13] बहु[14] महद्[15] गुरु[16] ॥६६॥
दैर्घ्य[1]मायाम[2] आनाह[3] आरोह[1]स्तु समुच्छ्रयः[2] ।
उत्सेध[3] उदयो[4]च्छ्रायौ[5] परिणाहो[1] विशालता[2] ॥६७॥
प्रपञ्चा[1]-भोग[2]-विस्तार[3]-व्यासाः[4] शब्दे स विस्तरः[1] ।
समास[1]स्तु समाहारः[2] सङ्क्षेपः[3] संग्रहो[4]ऽपि च ॥६८॥
सर्वं[1] समस्त[2] मन्यूनं[3] समग्रं[4] सकलं[5] समम्[6] ।
विश्वा[7]-शेषा[8]-खण्ड[9]-कृत्स्न[10]-न्यूनानि[11] निखिला[12]-
खिले[13] ॥६९॥

खण्डे[1]ऽर्द्ध[2]-शकले[3] भित्तं[4] नेम[5]-शल्क[6]-दलानि[7] च ।
अंशो[1] भाग[2]स्तु वण्टः[3] स्यात् पाद[1]स्तु स तुरीयकः ॥७०॥
मलिनं[1] कच्चरं[2] म्लानं[3] कश्मलं[4] च मलीमसम्[5] ।
पवित्रं[1] पावनं[2] पूतं[3] पुण्यं[4] मेध्य[5]मथोज्ज्वलम्[1] ॥७१॥

---

(१) त्रुटावित्यपि पाठः ॥ (२) कनिष्ठ इति वा ॥

विमलं[2] विशदं[3] वीध्र[4]मवदात[5]मनाविलम्[6]।
विशुद्धं[7] शुचि[8] चोक्षं[9] तु निःशोध्य[1]मनवस्करम्[2] ॥७२॥
निर्णिक्तं[1] शोधितं[2] मृष्टं[3] धौतं[4] क्षालित[5]मित्यपि।
सम्मुखीन[1]मभिमुखं[2] पराचीनं[1] पराङ्मुखम्[2] ॥७३॥

मुख्यं[1] प्रकृष्टं[2] प्रमुखं[3] प्रबर्हं[4]
वर्यं[5] वरेण्यं[6] प्रवरं[7] पुरोगम्[8]।
अनुत्तरं[9] प्राग्रहरं[10] प्रवेकं[11]
प्रधान[12]मग्रेसर[13]मुत्तमा[14]ग्रे[15] ॥७४॥

ग्रामण्य[16]-ग्रण्य[17]-ग्रिम[18]-जात्या[19]
ग्रेग्रा[20]नुत्तमान्य[21] नवरार्द्ध्य[22]-वरे[23]।
प्रष्ठ[24](1)-परार्द्ध्य[25]-पराग्र्य[26]-श्रेयसि[27]
तु श्रेष्ठ[2]-मत्तमे[3] पुष्कल[4]-वत् ॥७५॥

स्युरुत्तरपदे व्याघ्र[1]-पुङ्गव[2]-र्षभ[3]-कुञ्जराः[4](2)।
सिंह[5]-शार्दूल[6]-नागा[7]-द्या स्तल्लज[8]श्च मतल्लिका[9] ॥७६॥
मचर्चिका[10] प्रकाण्डो[11]-द्धौ[12] प्रशस्तार्थ-प्रकाशकाः।
गुणोपा-सर्जनो[1]-पाग्राण्य[2](3) प्रधाने[3]ऽधमं पुनः ॥७७॥
निकृष्टं[1] मणकं[2] गर्ह्यं[4] मवद्यं[5] काण्ड[6]-कुत्सिते[7]।

---

(१) प्रेष्ठ इति वा॥

(२) पुरुषो व्याघ्र इव पुरुष व्याघ्रः इत्यादिषु उपमेयं व्याघ्रैरिति समासः। अश्वश्वासौ कुञ्जरश्च अश्व कुञ्जरः गौ श्चासौ नागश्च गो नागः॥

(३) उपाग्रप्राणीति वा॥

अपकृष्टं[८] प्रतिकृष्टं[९] याप्यं[१०] रेफो[११] ऽवमं[१२] ब्रुवम्[१३] ॥७८॥

खेटं[१४] पापम्[१५] अपशदं[१६] कुपूयं[१७] चेलम्[१८] अर्व[१९] च ।

तदासेचनकं[१] यस्य दर्शनाद्दृग्न तृप्यति ॥७९॥

चारु[१] हारि[२] रुचिरं[३] मनोहरं[४]

वल्गु[५] कान्तम्[६] अभिराम[७]-बन्धुरे[८] ।

वाम[९]-रुच्य[१०]-सुषमाणि[११] शोभनं[१२]

मञ्जु[१३]-मञ्जुल[१४]-मनोरमाणि[१५] च ॥८०॥

साधु[१६]-रम्य[१७]-मनोज्ञानि[१८] पेशलं[१९] हृद्य[२०]-सुन्दरे[२१] ।

काम्यं[२२] कम्रं[२३] कमनीयं[२४] सौम्यं[२५] च मधुरं[२६] प्रियम्[२७] ॥८१॥

व्युष्टिः[१] फलं[२] असारं[१] तु फल्गु[२] शून्यं[१] तु रिक्तकम्[२] ।

शून्यं[३] तुच्छं[४] वशिकं[५](१) च निविडं[१] तु निरन्तरम्[२] ॥८२॥

निविरीसं[३] घनं[४] सान्द्रं[५] नीरन्ध्रं[६] बहलं[७] दृढम्[८] ।

गाढम्[९] अविरलं[१०] चाथ विरलं[१] तनु[२] पेलवम्[३] ॥८३॥

नवं[१] नवीनं[२] सद्यस्कं[३] प्रत्यग्रं[४] नूत्न[५]-नूतने[६] ।

नव्यं[७] चाभिनवे[८] जीर्णं[१] पुरातनं[२] चिरन्तनम्[३] ॥८४॥

पुराणं[४] प्रतनं[५] प्रत्नं[६] जरत्[७] मूर्त्तं[१] तु मूर्त्तिमत्[२] ।

उच्चावचं[१] नैकभेदं[२] अतिरिक्ता[१]-धिके[२] समे ॥८५॥

पार्श्वं[१] समीपं[२] सविधं[३] ससीमा[४]-

भ्याशं[५] सवेशा[६]-न्तिक[७]-सन्निकर्षाः[८] ।

सदेश[९] मभ्यग्र[१०]-सनीड[११]-सन्नि-

धाना[१२] न्युपान्त[१३] निकटो[१४]-पकण्ठे[१५] ॥८६॥

---

(१) वशिकम् इति वा ॥

सन्निकृष्ट[६]-समर्य्यादा१[७]-ऽभ्यर्णा१[८]सन्ना१[९]-सन्निधी[१०] ।
अव्यवहिते१ऽनन्तरं[२] संसक्तं[३] मपटान्तरम्[४] (1) ॥८७॥
नेदिष्ठ[१]मन्तिकतमं[२] विप्रकृष्ट१ पर[२] पुनः ।
दूरे[१]ऽतिदूरे१दविष्ठं[२]दवीयो[३]ऽथ सनातनम्१ ॥८८॥
शाश्वता[२]-नश्वरे[३] नित्यं[४] ध्रुवं[५] स्थेय[१]स्त्वतिस्थिरम्[२] ।
स्थास्नु[३] स्थेष्ठं[४] तत् कूटस्थं१ कालव्याप्येकरूपतः ॥८९॥
स्थावरं१ तु जङ्गमान्य-ज्जङ्गमं[१] तु त्रसं[२] चरम्[३] ।
चराचरं[४] जग[५]दिङ्गं[६]चरिष्णु[७]चाथ चञ्चलम्१ ॥९०॥
तरलं[२] कम्पनं[३] कम्प्रं[४] परिप्लव[५]-चलाचले[६] ।
चटुलं[७] चपलं[८]लोलं[९]चलं[१०]पारिप्लवा[११]-स्थिरे[१२] ॥९१॥
ऋजा[१]वजिह्म[२]-प्रगुणा[३]ववाग्रे[१] ऽवनता[२]-नते[३] ।
कुञ्चितं[१]नतमा[२]विद्धं[३]कुटिलं[४]वक्र[५]-वेल्लिते[६] ॥९२॥
वृजिनं[७]भङ्गुरं[८]भुग्नं[९]मरालं[१०] जिह्म[११]मूर्म्मिमत्[१२] ।
अनुगे[१]ऽनुपदा[२]-न्वक्षा[३](२)-न्वक्षेत्र[४]कारव्ये[१]क[२] एकक:[३] ॥९३॥
एकात्ताना[१]-यन[२]-सर्गा[३]-ग्राख्यै[४]काग्रंत्र[५] च तङ्गतम्[६] ।
(२)अनन्यवृत्त्ये[७] कायनगतं[८] चाथाद्यमा[१] दिमम्[२] ॥९४॥
पौरस्त्यं[३] प्रथमं[४] पूर्व्व[५]मादि[६] रग्र[७] मथान्तिमम्[१] ।
जघन्य[२]मन्त्यं[३]चरम[४]मन्त्:[५]पाश्चात्य[६]-पश्चिमे[७] ॥९५॥
मध्यमं[१].माध्यमं[२] मध्यमीयं[३] माध्यन्दिनं[४] च तत् ।
अभ्यन्तर[१]मन्तरालं[२] विचाले[३]मध्य[१] मन्तरे[२] ॥९६॥

---

(१) अपदान्तरमित्यपि दृश्यते ॥ (२) अन्वग् अन्वचो अन्वक्षि ॥
(३) एकतानम् १ एकायनम् २ एकसर्गः ३ एकाग्रम् ४ ॥

तुल्यः[१] समानः[२] सदृक्षः[३] सरूपः[४] सदृशः[५] समः[६] ।
साधारण[७]-सधर्माणौ[८] सवर्णः[९] सन्निभः[१०] सदृक्[११] ॥९७॥
स्युरुत्तरपदे प्रख्यः[१] प्रकारः[२] प्रतिमो[३] निभः[४] ।
भूत[५]-रूपो[६]-पमाः[७] काशः[८] सं[९]-नी[१०]-प्र[११]-प्रति[१२]-तः-परः(१) ॥९८॥

औपम्य[१]मनुकारो[२]ऽनुहारः[३] साम्यं[४] तुलो[५]पमा[६] ।
कर्मो[७]पमान[८]मर्चा[१] तु प्रतेर्मा[२] यातना[३] निधिः[४](२) ॥९९॥
छाया[५] छन्दः[६] कायो[७] रूपं[८] बिम्बं[९] मान[१०]-कृती[११] अपि ।
सूर्मी[१] स्थूणा[२]ऽयःप्रतिमा[३] हरिणी[१] स्याद्धिरण्मयी ॥१००॥
प्रतिकूलं[१] तु विलोम[२]मपसव्य[३]मपष्टुरम्[४] ।
वामं[५] प्रसव्यं[६] प्रतीपं[७] प्रतिलोम[८]मपष्ठु[९] च ॥१०१॥
वामं[१] शरीरेऽङ्गं सव्य[२]मपसव्यं[१] तु दक्षिणम्[२] ।
अबाधो[१]-च्छृङ्खलो[२]-द्दामान्य[३]यन्त्रित[४]मनर्गलम्[५] ॥१०२॥
निरङ्कुशो[६] स्फुटं[१] स्पष्टं[२] प्रकाशं[३] प्रकटो[४]ऽल्वणं[५] ।
व्यक्तं[६] वर्तुलं[१] तु वृत्तं[२] निस्तलं[३] परिमण्डलम्[४] ॥१०३॥
बन्धुरं[१] तून्नतानतं[२] स्यपुटं[१] विषमोन्नतम्[२] ॥

---

(१) सङ्काशः १ नीकाशः २ प्रकाशः ३ प्रतिकाशः ४। घञ्युपसर्गस्येति दीर्घः प्रतीकाश इत्यपि ॥

(२) प्रतेः प्रति उपसर्गात्परे मा-प्रभृतयः कृतिपर्यन्ताः शब्दा योज्यन्ते यथा। प्रतिमा १ प्रतियातना २ प्रतिनिधिः ३ प्रतिच्छाया ४ प्रतिच्छन्दः ५ प्रतिकायः ६ प्रतिरूपं ७ प्रतिबिम्बं ८ प्रतिमानं ९ प्रतिकृतिः २ ।

अन्य[1]दन्यतर[2]द्भिन्नं[3]त्वमे[4]कमि[5]तर[6]च्च तत् ॥१०४॥
करम्बः[1] कबरो[2] मिश्रः[3] सम्पृक्तः[4] खचितः[5] समाः ।
विविध[1]स्तु बहुविधो[2] नानारूपः[3] पृथग्विधः[4] ॥१०५॥
त्वरितं[1] सत्वरं[2] तूर्णं[3] शीघ्रं[4] क्षिप्रं[5] द्रुतं[6] लघु[7] ।
चपला[8]ऽविलम्बिते[9] च झम्पा[1]सम्पातपाटवम्[2](१) ॥१०६॥
अनारतं[1] त्वविरतं[2] संसक्तं[3] सतता[4] निशे[5] ।
नित्या[6]-नवरता[7]-जस्रा[8]-सक्ता[9]-श्रान्तानि[10] सन्ततम्[11] ॥१०७॥
साधारणं[1] तु सामान्यं[2] दृढसन्धि[1] तु संहतम्[2] ।
कलिलं[1] गहने[2] सङ्कीर्णं[1] तु सङ्कुल[2]माकुलम्[3] ॥१०८॥
कीर्णं[4] माकीर्णं[5] च पूर्णं[1] त्वाचितं[2] छन्न[3]-पूरिते[4] ।
भरितं[5] निचितं[6] व्याप्तं[7] प्रत्याख्याते[1] निराकृतम्[2] ॥१०९॥
प्रत्यादिष्टं[3] प्रतिक्षिप्त[4]मपविद्धं[5] निरस्त[6]-वत् ॥
परिक्षिप्तं[1] वलयितं[2] निवृतं[3] परिवेष्टितम्[4] ॥११०॥
परिष्कृतं[5] परीतं[6] च त्यक्तं[1] तूत्सृष्ट[2]मुज्झितम्[3] ।
धूतं[4] हीनं[5] विधूतं[6] च विन्नं[1] वित्तं[2] विचारिते[3] ॥१११॥
अवकीर्णं[1] त्ववध्वस्तं[2] सम्वीते[1] रुद्ध[2]मावृतम्[3] ।
संवृतं[4] पिहितं[5] छन्नं[6] स्थगितं[7] चापवारितम्[8] ॥११२॥
अन्तर्हितं[9] तिरोहित[10]मन्तर्द्धि[1] रपवारणम्[2] ।
छदन[3]-व्यवधा[4]-ऽन्तर्द्धा[5]-पिधान[6]-स्थगनानि[7] च(२) ॥११३॥
व्यवधानं[8] तिरोधानं[9] दर्शितं[1] तु प्रकाशितम्[2] ।

(१) उच्चानीचैः पतनस्य ॥ (२) स्थगनानि च इत्यपि ॥

आविष्कृतं[3] प्रकटित[4] मुच्चण्डं[1] त्वविलम्बितम्[2] ॥११४॥
अनादृत[1] मवात् ज्ञातं[2] मानितं[3] गणितं[4] मतम्[5] ।
(1)रीढा[1]-ऽवज्ञा[2]-ऽवहेला[3]ऽन्यसूक्षणं[4] चाप्यनादरे[5] ॥११५॥
उन्मूलित[1] मावर्हितं[2] स्यादुत्पाटित[3]मुद्धृतम्[4]।
प्रेङ्खोलितं[1] तरलितं[2] लुलितं[3] प्रेङ्खितं[4] धुतम्[5] ॥११६॥
चलितं[6]कम्पितं[7]धूतं[8]वेल्लिता[9]-न्दोलिते[10] अपि ।
दोला[1]प्रेङ्खोलनं[2]प्रेङ्खा[3]फाण्टं[1]कृतमयत्नतः ॥११७॥
अधःक्षिप्तं[1] न्यञ्चितं[2] स्यादूर्ध्वक्षिप्त[1]मुदञ्चितम्[2] ।
नुन्न[1]-नुत्ता[2]स्त[3]-निष्ठ्यूतान्या[4]विद्धं[5]क्षिप्त[6]मीरितम्[7] ॥११८॥
समे दिग्ध[1]-लिप्ते[2] रुग्णो[1]-भुग्ने[2] रूषित[1]-गुण्डिते[2] ।
गूढ[1] गुप्ते[2] च मुषित[1]-मूषिते[2] गुणिता[1]-हते[2] ॥११९॥
स्यान्निशातं[1] शीतं[2] शातं[3] निशितं[4] तेजितं[5] क्ष्णुतम्[6] ।
वृते[1]तु वृत्त[2]-व्यावृत्तौ[3]ह्रीत[1]-ह्रीणौ[2]तु लज्जिते[3] ॥१२०॥
सङ्गूढः[1]स्यात् सङ्कलिते[2] संयोजित[1] उपाहिते[2] ।
पक्वं[1]परिणतं[2]पाके क्षीरा-ज्य-हविषां शृतम्[1] ॥१२१॥
निष्पक्वं[1] क्वथिते[2] भृष्ट[1]-प्लुष्ट[2]-दग्धो[3]-षिताः[4] समाः ।
तनूकृते[1]त्वष्ट[2]-तष्टौ[3] विद्धे[1] छिद्रित[2]-वेधितौ[3] ॥१२२॥
सिद्धे[1] निर्वृत्त[2]-निष्पन्नौ[3]विलीने[1]द्रुत[2]-विद्रुतौ[3] ।
उतं[1]प्रोते[2] स्यूत[1] मूत[2] मुतं[3] च तन्तुसन्तते[4] ॥१२३॥
पाटितं[1] दारितं[2] भिन्ने[3] विदरः[1] स्फुटनं[2] भिदा[3] ।

(1) अवज्ञातम् १ अवमानितम् २ अवगणितम् ३ अवमतम् ४ ॥

अङ्गीकृतं प्रतिज्ञातमूरीकृतोररीकृते(१) ॥१२४॥
संश्रुतमभ्युपगतमुररीकृतमाश्रुतम् ।
सङ्गीर्णं प्रतिश्रुतं च छिन्नं लूनं छितं दितम् ॥१२५॥
छेदितं खण्डितं वृक्णं कृत्तं प्राप्तं तु भावितम् ।
लब्धमासादितं भूतं पतिते गलितं च्युतम् ॥१२६॥
स्रस्तं भ्रष्टं स्कन्नपन्ने संश्रितं तु सुनिश्चितम् ।
इङ्गितं मार्गितान्विष्टान्वेषितानि गवेषिते ॥१२७॥
स्तिमिते स्तिमितक्लिन्नसार्द्रार्द्रोन्नाः समुन्नवत् ।
प्रस्थापितं प्रतिशिष्टं प्रहितं प्रेषिते अपि ॥१२८॥
ख्याते प्रतीते प्रज्ञातवित्तप्रथितविश्रुताः ।
तप्ते सन्तापितो दूनो धूपायितश्च धूपितः ॥१२९॥
लीने स्त्यानमुपनतः स्तूपसन्न उपस्थितः ।
निर्वातस्तु गते वाते निर्वाणः पावकादिषु(२) ॥१३०॥
वृद्ध मेधितं प्रौढं विसृताभ्यर्गते समे ।
वान्तं मुद्गते गूनं हन्नं मीढं(३) तु मूत्रिते ॥१३१॥
वेदितं बुधितं बुद्धं ज्ञातं सितगते अवात्(४) ।
नितं प्रतिपन्नं च रयन्नं रीणं स्नुतं श्रुतम्(५) ॥१३२॥

(१) उररीकृते इति वा ॥

(२) पावकोऽग्निः निर्वाणो विध्यातं इत्यर्थः आदिना निर्वाणो निः निर्वाणं मुक्तिः ॥

(३) पुरीषोत्सर्गस्य ॥

(४) अवसितम् १ अवगतम् २ ॥

(५) स्रुतं स्नुतमिति वा ॥

गुप्त[1]-गोपायित[2] त्रात[3]-वित[4]त्राणानि[5] रक्षिते[6] ।
कर्म्म[1]क्रिया[2]विधा[3]हेतुशून्या त्वास्या विलक्षणम्[1] ॥१३३॥
कार्म्मणं[1] मूलकर्म्मा[2]थ संवननं[1] वशक्रिया[2] ।
प्रतिबन्धः[1]प्रतिष्टम्भः[2] स्यादास्या[1]ऽऽस्था[2]ऽऽसना[3]स्थितिः[4] ॥१३४॥
परस्परं[1] स्यादन्योन्य[2]मितरेतर[3]मित्यपि ।
आवेशा[1]-टोपौ[2]संरम्भो[1]निवेशो[1]रचना[2]स्थितौ[3] ॥१३५॥
निर्बन्धो[1] ऽभिनिवेशः[2] स्यात् प्रवेशो[1] ऽन्तर्विगाहनम्[2] ।
गतौ[1]वीङ्खा[2]-विहारे[3]-र्य्या[4]-परिसर्प[5]-परिक्रमाः[6] ॥१३६॥
व्रज्या[1] ऽटाट्या[2] पर्य्यटनं[3] चर्य्या[1]त्वीर्य्यापथस्थितिः[2] ।
व्यत्यास[1]स्तु विपर्य्यासो[2]वैपरीत्यं[3] विपर्य्ययः[4] ॥१३७॥
व्यत्यये[5] ऽथ स्नाति[1]र्हेड्डौ[2] प्रीणने[1] ऽवनं[2] तर्पणं[3] ।
परित्राणं[1]तु पर्य्याप्ति[2]र्हस्तधारण[3]मित्यपि ॥१३८॥
प्रणतिः[1] प्रणिपातो[2] ऽनुनये[3]ऽथ शयने क्रमात्(१) ।
विशाय[1]उपशाय[2]श्च पर्य्यायो[1]ऽनुक्रमः[2]क्रमः[3] ॥१३९॥
परिपाट्या[4]नुपूर्व्या[5]वृत्[6] अतिपात[1] स्त्वतिक्रमः[2] ।
उपात्ययः[3]पर्य्यय[4]श्च समौ सम्बाध[1]-सङ्कटौ[2] ॥१४०॥
कामं[1] प्रकामं[2] पर्य्याप्तं[3] निकामे[4]-ष्टे[5] यथेप्सिते[6] ।
अत्यर्थे[1]गाढ[2]मुद्गाढं[3]बाढं[4]तीव्रं[5]भृशं[6]दृढम्[7] ॥१४१॥
अतिमात्रा[8]-तिमर्य्याद[9]-नितान्तो[10]त्कर्ष[11]-निर्भराः[12] ।
भरै[13]-कान्ता[14]-तिवेला[15]-तिशया[16]जृम्भा[1]तु जृम्भणम्[2] ॥१४२॥
आलिङ्गनं[1] परिष्वङ्गः[2] संश्लेष[3]उपगूहनम्[4] ।

---

(१) क्रमशयनस्य ॥

अङ्कपाली[5]परीरम्भः[6]क्रोडीकृति[7]रथोत्सवे[1] ॥१४२॥
महः[2] क्षणो[3]-द्धवो[4]-द्धर्षा[5] मेलके[1] सङ्ग[2] सङ्गमौ[3] ।
अनुग्रहो[1]ऽभ्युपपत्तिः[2]समौ निरोध[1]निग्रहौ[2] ॥१४३॥
विघ्नो[1]ऽन्तराय[2]-प्रत्यूह[3]-व्यवाया[4] समये[1] क्षणः[2] ।
वेला[3]-वारा[4]ववसरः[5]प्रस्तावः[6] प्रक्रमो[7]ऽन्तरम्[8] ॥१४५॥
अभ्यादान[1]मुपोद्घात[2] आरम्भः[3]-प्रोप-तः[4]क्रमः[5](१) ।
प्रत्युत्क्रमः[1]प्रयोगः[2]स्यादारोहणं[1] त्वभिक्रमः[2] ॥१४६॥
आक्रमे[1]ऽधिक्रम[2]क्रान्ती[3]व्युत्क्रम[1]स्तूत्क्रमो[2]ऽक्रमः[3] ।
विप्रलम्भो[1]विप्रयोगो[2]वियोगो[3]विरहः[4] समाः ॥१४७॥
आभा[1] राढा[2] विभूषा[3] श्री[4]रभिख्या[5]-कान्ति[6]-विभ्रमाः[7] ।
लक्ष्मी[8]श्छाया[9]च शोभायां[10]सुषमा[1]सातिशायिनी ॥१४८॥
संस्तवः[1] स्यात् परिचय[2] आकार[1]स्त्विङ्ग[2] इङ्गितम्[3] ।
निमित्तं[1]कारणं[2]हेतु[3]बीजं[4]योनि[5]र्निबन्धनम्[6] ॥१४९॥
निदान[7]मथ कार्य्यं[1] स्यादर्थ[2] कृत्यं[3] प्रयोजनम्[4] ।
निष्ठा[1]निर्व्वहणं[2]तुल्ये प्रवर्हो[1] गमनं बहिः ॥१५०॥
जातिः[1] सामान्यं[2] व्यक्ति[1]स्तु विशेषः[2] पृथगात्मिका[3] ।
तिर्य्यक्[1]साचिः[2]संहर्ष[1]स्तु स्पर्द्धा[2]द्रोह[1] स्त्वपक्रिया[2] ॥१५१॥
बन्ध्ये[1] मोघा[2]-फलं[3]-मुधा[4] अन्तर्गडु[1] निरर्थकम्[2] ।
संस्थानं[1] सन्निवेशः[2] स्यादर्थस्यापगमे व्ययः[1] ॥१५२॥
सम्मूर्छनं[1] त्वभिव्याप्ति भ्रेषो[1] भ्रंशो यथोचितात् ।
अभावो[1]नाशो[2]संक्राम[1]-संक्रमौ[2] दुर्गसञ्चरे[3] ॥१५३॥

---

(१) कर्मारम्भो आद्यव्यापारस्य प्रक्रमः १ उपक्रमः २ ॥

नीवाक[1]स्तु प्रयामः[2](१) स्यादवेक्षा[1] प्रतिजागरः[2]।
समौ विश्रम्भ[1]-विश्वासौ[2] परिणाम[1]स्तु विक्रिया[2] ॥१५४॥
चक्रावर्त्तो[1] भ्रमणे[2] भ्रान्ति[3]-र्भ्रमि[4]-र्घूर्णि[5]श्च घूर्णने[6]।
विप्रलम्भो[1] विसंवादो[2] विलम्भ[1]स्त्वतिसर्जनम्[2] ॥१५५॥
उपलम्भ[1]स्त्वनुभवः[2] प्रतिलम्भ[1]स्तु लम्भनम्[2]।
नियोगो[1] विधि[2]-सम्प्रैषौ[3] विनियोगो[1]ऽर्पणं फले ॥१५६॥
लवो[1]ऽभिलावो[2] लवनं[3] निष्पावः[1] पवनं[2] पवः[3]।
निष्ठीव[1]-ष्ठीवन[2](२) ष्ठ्यूत[3]-ष्ठीवनानि[4] तु थूत्कृते[5] ॥१५७॥
निवृत्तिः[1] स्यादुपरमो[2] व्य[3]-वो-पा[4]-भ्यः[5] पराः[6]रतिः(३)।
विधूननं[1] विधुवनं[2] रिङ्खणं[1] स्खलनं[2] समे ॥१५८॥
रक्षा[1]-त्राणे[2] ग्रहो[1] ग्राहे[2] व्यधो[1] वेधे[2] चये[1] चिया[2]।
स्फरणं[1] स्फुरणे[2] ज्यानि[1]-जीर्णी[2]रथ वरो[1] वृतौ[2] ॥१५९॥
समुच्चयः[1] समाहारो[2]ऽपहारा[1]-पचयौ[2] समौ।
प्रत्याहार[1] उपादानं[2] बुद्धिशक्तिस्तु निःक्रमः[1] ॥१६०॥
इत्यादयः क्रियाशब्दा लक्ष्या धातुषु लक्षणम्।
अथाऽव्ययानि वक्ष्यन्ते स्वः[1] स्वर्गे भू[1] रसातले ॥१६१॥
भुवो[1] विहायसा[2] व्योम्नि द्यावाभूम्यो स्तु रोदसी[1]।
उपरिष्टा[1]दुपर्यूर्द्ध्वे[2] स्यादधस्ता[1]दधो[2]ऽप्य वाक्(४) ॥१६२॥

---

(१) तुल्याढ्यताऽन्यूनाधिकस्य ॥
(२) निष्ठेव ष्ठेवनानि इति वा ॥
(३) विरतिः १ अवरतिः २ उपरतिः ३ आरतिः ४ ॥
(४) अवाक् उवाची अवाञ्चि, पान्तः क्लीवः ॥

वर्ज्जने त्वन्तरेणा[1]र्त्ते[2]हिरुग्[3] नाना[4] पृथग्[5] विना[6]।
साकं[1] सत्रा[2] समं[3] सार्द्धं[4] ममा[5] सह[6] कृतं[1] स्वयम्[2] ॥१६३॥
भवत्क[2]स्तु[4] च किं[5] तुल्याः प्रेत्या[1]ऽमुत्र[2] भवान्तरे।
तूष्णीं[1] तूष्णीकां[2] जोषं[3] च मौने दिष्ट्या[1] तु सम्मदे ॥१६४॥
परितः[1] सर्व्वतो[2] विष्वक्[3] समन्ता[4]च्च समन्ततः[5]।
पुरः[1]पुरस्तात्[2]पुरतो[3]ऽग्रतः प्राय[1]स्तु भूमनि ॥१६५॥
साम्प्रत[1]मधुने[2]दानीं[3] सम्प्रत्य[4] तत्त्वे याञ्जसा[1]।
द्राक्[2] स्रा[3]गरं[4]झटित्या[5]शु[6]मङ्क्षु[7]क्षाय[8]च सत्वरम् ॥१६६॥
सदा[1]सना[2]ऽनिशं[3] शश्वत्[4] भूयो[1]ऽभीक्ष्णं[2] पुनः पुनः[3]।
असकृत्[4]मुहुः[5]सायं[1] तु दिनान्ते दिवसे दिवा[1] ॥१६७॥
सह[1]सैकपदे[2] सद्यो[3]ऽकस्मात्[4] सपदि[5] तत्क्षणे।
चिराय[1]चिररात्राय[2]चिरस्य[3] च चिरा[4]च्चिरम्[5](1) ॥१६८॥
चिरेण[6] दीर्घकालार्थे कदाचि[1]ज्जातु[2] कर्हिचित्[3]।
दोषा[1]नक्तं[2]मुषा[3]रात्रौ प्रगे[1] प्रात[2]रहर्मुखे ॥१६९॥
तिर्य्य-गर्थे तिरः[1] साचि[2] निष्फले तु वृथा[1] सुधा[2]।
कृषा[1]मिथ्या[2]ऽनृते ऽभ्यर्णे समया[1] निकषा[2] हिरुक्[3] ॥१७०॥
घं[1] सुखे बलवत्[1]सुष्ठु[2] किमुता[3]तीवं[4] निर्भरे।
प्राक्[1]पुरा[2] प्रथमे वर्षे सम्वत्[1] परस्परे मिथः[1] ॥१७१॥
उषा[1] निशान्ते ऽल्पे किञ्चि[1]न्मना[2]गीष[3]च्च किञ्चन[4]।
आहो[1]उताहो[2]किमुत[3] वितर्के किं[4] किमू[5]त[6] च ॥१७२॥

(1) चिरायादि षड़पि विभक्त्यन्तरूपाः ॥

इतिह[1] स्यात् सम्प्रदाये(१) हेतौ य[1]त्त[2]द्यत[3] स्ततः[4] ।
सम्बोधनेऽङ्ग[1] भोः[2] प्याट्[3] पाट्[4] हे[5] है[6] हंहो[7] अरे[8]ऽयि[9] रे[10] ॥१७३॥
श्रौषट्[1] वौषट्[2] वषट्[3] स्वाहा[4] स्वधा[5] देवहविर्हुतौ ।
रहस्युपांशु[1] मध्येऽन्त[2]रन्तरेणा[3]न्तरे[3]ऽन्तरा[4] ॥१७४॥
प्रादुरा[1]विः[2] प्रकाशे स्यादभावे त्व[1] न[2] नो[3] नहि[4] ।
हठे प्रसह्य[1] मा[1] माऽलं[2] वारणेऽस्त[1]मदर्शने ॥१७५॥
अकामानुमतौ कामं[1] स्यादों[1] ओं[2] परमं[3] मते ।
कच्चि[1]दिष्टपरिप्रश्नेऽवश्यं[1] नूनं[2] च निश्चये ॥१७६॥
बहि[1] र्बहिर्भवे ह्यः[1] स्यादतीतेऽह्नि श्व[1] एष्यति ।
नीचै[1] रल्पे महत्युच्चैः[1] सत्वेऽस्ति[1] दुष्ठु[1] निन्दने ॥१७७॥
ननु च[1] स्याद्विरोधोक्तौ पश्चान्तरे तु चे[1] द्यदि[2] ।
प्राने[1]र्सान्दे ऽवरे त्व र्वाक्[1] रोषोक्तौ[1] उं नतौ नमः[1] ॥१७८॥

इत्याचार्य्य श्रीहेमचन्द्रविरचितायामभिधानचिन्तामणौ नाममालायां सामान्यकाण्डः षष्ठः समाप्तः ॥ ६ ॥

समाप्तश्चाऽयं ग्रन्थः ।



(१) सम्प्रदायो गुरुशिष्य प्रशिष्यादि क्रमम् उपदेशश्च गुरुपरम्परा-वचनं तस्मिन् ॥

अर्हं नमः ।

# हैमनाममालायाः

## शिलोञ्छः ।



अर्हं बीजं नमस्कृत्य गुरूणामुपदेशतः ।
श्रीहेमनाममालायाः शिलोञ्छः क्रियते मया ॥ १ ॥
सर्वीय इत्यपि जिने सम्भवे शम्भवेऽपि च ।
श्रीसुव्रते मुनिरपि नेमौ नेमीत्यपीष्यते ॥ २ ॥
षष्ठे गणेशे मण्डित पुत्रोऽपि कथ्यते बुधैः ।
मरुदेव्यपि विज्ञेया युगादिजिन मातरि ॥ ३ ॥
चक्रेश्वर्यामप्रतिचक्राप्यजितापि कविभिरचितबला
श्यामात्वच्युतदेव्यपि सुतारकोक्ता सुतारापि ॥ ४ ॥
भयकृज्जयकारोपि श्रमणाः श्रामणोऽपि च ।
प्रव्रज्यापि परिव्रज्या शिष्योन्तिषदपि स्मृतः ॥ ५ ॥
इति प्रथमकाण्डस्य शिलोञ्छोयं समर्थितः ॥ ६ ॥



व्योमयानमपि प्रोक्तं विमानं बुधपुङ्गवैः ।
स्यात् समुद्रनवनीतं पीयूषमपि चामृतम् ॥ ७ ॥
कथने व्यन्तरावान-मन्तरा (मञ्जरा) अपि सूरिभिः ।
द्योतस्तथा द्युणीमणी प्रोक्ता रश्मरभिधायिका ॥ ८ ॥—
समुद्रनवनीतश्च विदुश्चन्द्रमसस्सुधाः ।

चन्द्रिका चन्द्रिमाऽपि स्यादित्वला इल्वका अपि ॥ ९ ॥
अनूराधाप्यनुराधा ग्रहः सप्तर्षिजोपि च ।
सौरिः सौरोऽपि राहुस्तु ग्रहकल्लोल इत्यपि ॥ १०॥
अम्बुपिशाचोपि तथा नाडिका नालिकापि च ।
रात्रौ यामवतीत्वङ्गौ नि:सम्पातो निशीथवत् ॥११॥
तमः स्यादन्धतमसं वर्षाः स्वर्चिरिषा अपि ।
खेऽन्तरिक्षं सा स्फटिकमपि तात्कालने फले ॥१२॥
मेघमाला कालिकापि वार्दलञ्चापि दुर्दिने ।
सुत्रामाथोन्द्रे शतारः शतधारोपि भाऽशनौ ॥१३॥
आश्विनेयौ स्वर्गवैद्यौ ह्यर्यक्षोपि धनाधिपे ।
अलकावमलगाव-मपि शङ्करधन्वनि ॥१४॥
गौर्य्यां दाक्षायणीस्त्र्यौ नारायणो जलेशयः ।
कौमोदकी कौमोदकी चा द्रु शङ्खौ श्रियां मतौ ॥१५॥
कन्तुः कन्दर्पे सिद्धार्थः सुगते परिकीर्त्तितः ।
अङ्के व्याख्याविवाचाभ्यां युक्तिरपि पञ्चमे ॥१६॥
दृष्टिपातो द्वादशाङ्के कल्याणो वन्ध्यमप्यथ ।
निन्दागवो जुगुप्सायां चारणारतिमालिषु ॥१७॥
समाख्यातिः समाज्ञा च दुमती च दुशत्यपि ।
काल्याधि कल्या सन्ध्यायां समाधिरपि कथ्यते ॥१८॥
भीड़ः सुत्रामन्दाक्षश्च ह्रियाम्रूहापि चोहवत् ।
तन्द्रीस्तन्द्रीश्च निद्रायां संप्रस्वपिकापि च ॥१९॥
चर्ह पुञ्जिकया केशी कीशोपि स्याद्विदूरके ।
मार्गवन्मारिमोपीति शिलोञ्छो देवकाखगः ॥२०॥

सानन्वये सानपश्च चीरपश्चाभिधीयते ।
शिवाशयं स्याद्रोषतिका दग्धमीरुरो नरतरः ॥२१॥
कवितापि कविः स्यात्तु तत्कर्माणि कृतकृत्यकृतिकृतार्थाश्च ।
कुटिलाशयोपि कुचरोन्धजडः शेष्वप्यनेडमूकस्तु ॥२२॥
वदान्यौ सत्यगीत्यन्ये दानशीलप्रियम्वदौ ।
मूर्खे यथोक्ततोपीन्ये श्रीमानपि बुधैः स्मृतः ॥२३॥
विवधक वीवधिकावपि वैवधिके प्रतिचरोपि भृत्ये स्यात् ।
सम्राडङ्के बङ्ककरो बकुन्योर्जक इतीष्यते च परैः ॥२४॥
विहङ्गिकायाश्च विहङ्गिमाप्यथोर्ध्वदेहिके ।
अर्द्धदेहिकमप्याङ्कुरन्तितानन्त इत्यपि ॥२५॥
मायावि मायिकौ धूर्त्ते कपटे धूपधामता ।
चौरश्चौरेपि विज्ञेयस्तेयस्तैन्यमपीष्यते ॥२६॥
दाने प्रादेशनमपि क्षमा स्यात् क्षान्तिरित्यपि ।
क्रोधनः कोपनः स्पृष्टक् पिपासितोपि कथ्यते ॥२७॥
भक्षकः स्याद्दाशिरेपि मर्जितोपि च मार्जिता ।
पेयूषमपि पीयूषं कूर्चिकापि च कूर्च्चिका ॥२८॥
दूषेन्द्र प्रायमपि मोक्तं विजपिलञ्च पिच्छिले ।
व्योषे त्रिकटुकं अगधौ अमनं अवनं तथा ॥२९॥
अश्रायणोपि भवेत्कृष्णौ पौष्कलः पिष्टिताशिनि ।
मनोराज्य मनोगव्यावपि स्यातां मनोरथे ॥३०॥
कामुके कमनोपि स्यादाचारितोपि दूषिते ।
संशयालुः सांशयिकी जागरितापि जागरी ॥३१॥
कूणिते कुवाचितोपि तुन्दि भोदरिकावपि ।

तुन्दिले न्युब्जोपि कुब्जो खलतोयेन्द्र लुप्तिके ॥३२॥
पामरोपि कच्छुरोत्री सारक्याघतिसारकी ।
कुष्ठूतिरपि ᳚न्मूति विस्फोटे पिटके स्मृतः ॥३३॥
कोटो मण्डलकमपि गूडकीलोपि चार्शसि ।
मेहप्रमेहवद्वायुर्वृद्धिकोपि चिकित्सके ॥३४॥
आयुष्मानपि दीर्घायुः कथ्यतेऽथ परीक्षकः ।
स्यादाक्षपाटलिकोपि पारिषद्योपि सत्यवत् ॥३५॥
स्युर्नैमित्तिक नैमित्त-मौहूर्ता गणके त्रिपौ ।
लिखितापि मसीमेला कुलिको कुलिकोपि च ॥३६॥
अष्टापदे बुधैः शारिफलकोपि निगद्यते ।
मनोजवसाततुल्यो प्रभविष्णुरपि क्षमे ॥३७॥
जाङ्घिके जङ्घाकरोपि चाशुगोप्याशुगामिनि ।
पर्य्येषणौपासनापि शुश्रूषायामधीयते ॥३८॥
आतिथ्योप्यतिथौ तुल्ये भिक्षोगोत्रेतिसन्ततिः ।
महेला योषिता च स्त्री तरुणी युवतीत्यपि ॥३९॥
सुवासिनी चिरण्टो च चिरण्टी च चिरण्ट्यपि ।
वधुट्यां पतलां करात्री गेहिनी सहधर्म्मिणी ॥४०॥
सधर्म्मचारिणी चापि स्नुषायां तु वधूव्यपि ।
प्रेमवत्यपि कान्तायां पाणिगृहो विवोढरि ॥४१॥
परिणीतोपयन्ता च यौतके दाय इत्यपि ।
दिधीषु र्दिधिषू जीवं पत्नी जीवत्पतिः समे ॥४२॥
तुल्ये अवीरा निर्वीरे अवश अवशेति वा ।
रण्डापि विधवा पुष्पवती स्यात् पुष्पवत्यपि ॥४३॥

पुष्पं कुसुममप्युक्तं पशुधर्मोऽपि मोहने ।
षण्डोदरे सगर्भोऽपि स्याद्दग्रीयवद्ग्रिमः ॥४४॥
शुन: शव: पुण्डुरपि क्लीबो माता जनन्यपि ।
चिकुरा अपि केशा स्युः कर्णः शब्दग्रहोऽपि च ॥४५॥
नेत्रं विलोचनमपि शृङ्गाणी स्रक्कणी अपि ।
दाढिका द्राढिकापि स्यात्कपोणिस्तु कफोणिवत् ॥४६॥
कूर्परे कुर्पराः सिंहवले संहतलेऽपि च ।
चलुकोऽपि चलौ मुष्के स्याद्दण्डः पेलकोऽपि च ॥४७॥
पत्पादंघ्रिश्च चरणो कोकशान्वहृमित्यपि ।
कपालं शकलमपि दृष्टास्ते विकशारुका ॥४८॥
मज्जायामस्थितेजोऽपि नाडीषु नाडिनाटिका ।
सिङ्घाणकोऽपि सिंहाणः हूणीका हृणिकापि च ॥४९॥
शान्तः प्रान्तश्च विट्गूथेषु विषंशोऽपि वेषवत् ।
उत्सादनोत्साहनेऽपि शव शात्रौ तथा समौ ॥५०॥
वंशकं क्रमिजग्ध बा गरौ स्यादथबाह्लिकम् ।
सङ्कोचं पिशुनं वर्ण्यमसृक् संघं च कुङ्कुमे ॥५१॥
जायकेकालानुसार्यं यावनोऽपि च सिंहके ।
मकुटोऽपि च कोटीरे चित्रकस्तु विशेषके ॥५२॥
वतंसोऽप्यवतंसः स्यात्मतलख्यास्तु वल्लरी ।
मञ्जरी च पत्रात्यारितव्या पर्यां च तथ्यया ॥५३॥
कर्णपूरापि कर्णांशुः परिहार्योऽपि कङ्कणः ।
कङ्कणी किङ्किणी तुल्ये अच्छादाच्छादने समे ॥५४॥
कुष्पासश्चङ्गिका कथा पटे कथा पुटोऽपि च ।

कुथे वर्णपरिस्तोम इत्यस्वाङ्गं जगुः परे ॥५५॥
ततास्तरणमिति च पल्यङ्कोथ्यचपल्लिका।
यमन्यपि प्रतिसीरा संस्तरः प्रस्तरोपि च ॥५६॥
प्रतद्ग्राह प्रतिग्राहावपि स्यातां पतद्ग्रहे।
मुकुरोप्यात्मदर्शोऽथ कशिपुः कसिपुः समौ ॥५७॥
धावकालकौ यावे तुल्ये व्यजन वीजने।
गिरीयको गिरिकोपि वालक्रीडनके मतौ ॥५८॥
गण्डकोपि गण्डकोराट् मूर्द्धाभिषिक्त इत्यपि।
भरथः सर्वदमनोप्यथ दाशरथा वुभौ ॥५९॥
रामचन्द्र रामभद्रौ हनूमानपि मारुती।
वाली सुग्रीवाग्रजोऽपि पार्थे बीभत्सुरित्यपि ॥६०॥
सातवाहनवत्सालवाहनोपि प्रकीर्त्तितः।
परिच्छेदे परिजनः परिबर्हणमित्यपि ॥६१॥
मन्त्री बुद्धिसहायोपि वेत्री वेत्रधरोपि च।
हैमाध्यक्षो हैरिकोपि टंकपतिस्तु निष्किको ॥६२॥
शुद्धान्ताध्यक्ष आन्तर्वेश्मिकाभ्यन्तःपुरिकावपि।
सहाय साप्तपदिनौ सख्याबसुहृदाप्यरौ ॥६३॥
नयेनीतिरपि स्कन्धात्सरेपि शिबिरे मतः।
जयन्त्यपि वैजयन्त्यां पटाकापि प्रकीर्त्यते ॥६४॥
ध्वजः पताकादण्डोपि कम्पातं याथ यानवत्।
दीप्ते च्योष्टोपि स्तेक मचितोपि च वर्च्चिते ॥६५।
कवचे दंशनं त्वस्त्रं तनु त्राणमपि स्मृतम्।
अभियानं भियानं वाऽधिकाङ्ग वद्धकं तम् ॥ ६६ ॥

शिरक्कं शीलमप्याङ्कः स्यान्निमज्ज्यपि तूणिनि ।
चापे धनन्त्वनु शरासनान्यपि विदुर्बुधाः ॥६७॥
फरकैस्फुरको खेटे चुरिका छुरिका छुरी ।
तल्यान्तरबालकापि परिघः पलिघः समौ ॥६८॥
छर्जं सूर्जंस्वान्मगाधौ मञ्जो विधिकरोर्थिकः ।
सौखशारनिखः सौखः शय्यिका सौखसुप्तिके ॥६९॥
रणे संस्फोट संस्फोटौ बले टूविणमुक् तथा ।
अवस्कन्दोपिधाट्यांसान्नसनञ्च पलायने ॥७०॥
चारकोपि भवेद्गुप्तैस्तापसे तु तपस्व्यपि ।
विप्रे ब्रह्मापि वाग्मीभानीभस्यथ दृषा दृषी ॥ ७१ ॥
शमने शमनञ्चाथ दधि साज्यं पृषान्तके ।
अग्निहोत्रग्न्याहितोप्यथोपवासे समाविमौ ॥ ७२ ॥
उपवस्त्रमौपवस्त्रमुपवीते प्रचक्ष्यते ।
ब्रह्मसूत्रं पवित्रञ्च वाल्मीकौ द्वाविमावपि ॥७३॥
मैत्रावरुण्यादिकवी परशुरामोपि भार्गवे ।
योगेशो याज्ञवल्क्योथ दाक्षीपुत्रोपि पाणिनौ ॥७४॥
स्फोटायनः स्फौटायनः कात्यो वररुचौ तथा ।
कार्तवीर्यः पालकाप्ये चाणक्यश्चाणकात्मजः ॥७५॥
वैशेषिके कणादोपि जैनो नैकान्तवाद्यपि ।
चार्वाकलौकायतिकः कपिप्रसूतमित्यपि ॥ ७६ ॥
कण्ठ्योपि रिते दुरि च गमेश्वरोपि गोमति ।
दर्शके चित्रजीवोपि कोटीशोलोष्ठभेदनः ॥ ७७ ॥
माद्वीकमपि मद्ये तु तर्षोपि चर्षकः स्मृतः ।

कुविन्दस्तन्तुवायोपि व्येमा व्योमापि कीर्त्तिते ॥ ७८ ।
रजको धावकोप्युक्ताः पादूलायाञ्च पादुका ।
तैलिक। स्नलतुन्दोपि रथकारोपि बर्द्धिकः ॥ ७९ ॥
चित्रकरोलिखकरो लेप्यकल्लेप्यकोपि च ।
कुतूहलि विनोदोपि सौनिकः खटिकोपि च ॥८०॥
कूटयन्त्रे पाशयन्त्रं समौ चाण्डालपुक्कसौ ।
इत्थं तृतीयकाण्डस्य शिलोञ्छोयं समर्थितः ॥ ८१ ॥



खस्वती च भुविदिवः पृथिव्यावपि रोदसी ।
माणिबन्धं माणिबन्धं सैन्धवे वसुके वसु ॥ ८२ ॥
टङ्कमेष्टं कणनया वर्त्तनं वापि गीष्टति ।
जङ्गलः स्याज्जाङ्गलोपि मालनम्मालकोमतः ॥ ८३ ॥
पत्तने पट्टनमपि कुण्डिने कुण्डिनापुरम् ।
स्यात् कुण्डिनपुरमपि विपणौ पण्यवीथिका ॥ ८४ ।
सुरङ्गायां सन्धिरापे टङ्के धाममपि स्मृतम् ।
उपकार्य्योपकार्य्योपि प्रासादे च प्रसादनः ॥ ८५ ॥
शान्तिगृहं शान्तिगृहे प्राङ्गणं त्वङ्गणं मतम् ।
कपाटवत्कवाटोपि पक्षद्वारे खड़क्किका ॥ ८६ ॥
कुसूलवत्कुशूलोपि सम्पुटे पुट इत्यपि ।
पेटायां स्यात् पेटकोपि पेड़ापि कृतिनां मते ॥ ८७
अवन्यपि सूर्म्मिन्यामयोन्यं मुषलं विदुः ।
कण्डोलके पिटकोपि चूल्यामन्तीति कथ्यते ॥ ८८ ।
व्रजः खजाकोपि मथि विष्कम्भो कटकोस्य तु ।

अगोऽपि वर्त्तते क्रौञ्चः क्रौञ्चवन्मन्यते बुधैः ॥ ८९ ॥
कक्खट्यपि खटिन्यां सा ताम्रमौडुम्बरं विदुः ।
शातकुम्भमपि स्वर्णं पारदश्चपलोऽपि च ॥ ९० ॥
रसजातं रसाग्र्यञ्च कुष्ठे द्रावीरसोद्भवे ।
गौश्चिके वैष्णवोऽपि स्याद्गोपितं हरितालवत् ॥ ९१ ॥
मनःशिलायां नेपालीशिला च सुधियां मता ।
शृङ्गारमपि सिन्दूरे कुरुविन्दे तु हिङ्गुलः ॥ ९२ ॥
बोले गोले रसोऽप्युक्तो रत्नं माणिक्यमित्यपि ।
पद्मरागो शोणरत्नं वैराटो राजपट्टवत् ॥ ९३ ॥
नीले मणौ महानीलं कश्मकमपि सारिणी ।
धूमिका धूममहिषी धूमयो मिहिकाः समाः ॥ ९४ ॥
अकूपारोऽपि जलधौ मकरालय इत्यपि ।
निम्नगायां ह्रादिनी स्याज्जह्नुकन्यापि जाह्नवी ॥९५॥
कलिन्दपुत्री कालिन्दी रेवा मेकलकन्यका ।
चान्द्रभागा चन्द्रभागा गोतमी गोमतीत्यपि ॥ ९६ ॥
चक्राण्यपि पुटभेदा पङ्के चिरकल इत्यपि ।
उद्घाटनोद्घाटने च घटीयन्त्रे प्रकीर्त्तिते ॥ ९७ ॥
सरस्तडागस्तटाकोऽप्यथ तल्लश्च पल्वले ।
आश्रयाशशुष्मवर्हिर्वैह्निककुदमूनसः ॥ ९८ ॥
अग्नौ स्वर्णप्रभा विद्युद्गन्धवाहः सदागती ।
वायौ चरण्योऽपि दुस्त्वक् त्वचासावके पुनः ॥ ९९ ॥
स्येलुं वलुवौ माकन्द रसालावपि चूतवत् ।
किङ्करात कुरण्टक कुरण्डकावपि स्मृतौ ॥१००॥

कर्कन्धूरपि कर्कन्धौ क्षुद्राद्विवाटरूषकः ।
वाशा;ष क्षुद्विः खुड्डा प्रियालोपि पियालवत् ॥१०१

मार्य्यङ्कोपि च मारङ्गो रङ्को विभेदक इत्यपि ।
भवेत्तमालतापिच्छो निर्गुण्डी सुन्दुवारवत् ॥१०२॥

जपा जवा मातुलिङ्गो मालुलिङ्गोपि कीर्त्तितः ।
धत्तूर इव धुत्तूरो वध्रलकृत्वार इत्यपि ॥१०३॥

ह्रीवेर केशसलिल पर्य्यायैः स्मर्य्यते बुधैः ।
पद्माजिन्यां कमलिनी कमुदिनी कुमुद्वती ॥१०४॥

बिसप्रसूतं कमले कुमुत्कुमुदवन्मतम् ।
शेपालश्च जलनीली सातीलोपि शतीमवत् ॥१०५॥

कुल्माष च कुल्माषोपि गवेधुका गवीधुका ।
कणिशं कणिशो रूढे धान्ये त्वावासितं मतम् ॥१०६

हालाहले हालहलं मुस्तायां मुस्तकोपिच ।
क्रमिः क्रमिरपि गण्डपदः किंचूलकोपि च ॥१०७॥

शास्तुका अपि शस्तूका वृश्चिकोद्धृत इत्यपि ।
भसलो मधुकं पाली पिक्वो विक्वः करिः करीः ॥१०८

व्यालो व्याडोप्यौपवाह्योप्युपवाह्योपि राचिरा ।
शृङ्खलो निगडोऽन्दुश्च कक्षा कच्यापि वाह्लिके ॥१०९॥

वाह्लीकोपि वला वागे खलिनश्च खलीनवत् ।
मर्य्योपुष्टो गोपतौ तु शाण्ड इत्वर इत्यपि ॥११०॥

स्यौरि स्यूर्य्यपिककुदेना कुल्मकुदमित्यपि ।
नैचिकं नैचिकी च स्यान्मलिना बालगर्भिणी ॥१११॥

पवित्रं गोमये छागे शुभोय भषकः शुनि ।

वैरमा देवश्रूश्चास्य यमरयोपि चौरिभे ॥११२॥
पारिन्द्रइव पारीन्द्रः शरभेऽष्टापदोपि च ।
शृगालवञ्चकोप्यस्ति म्रवगः म्रवगोपि च ॥ ११३॥
वागायुरपि वातायुश्चन्दरोपि च मर्कटे ।
कुर्कुटेऽपि क्ष्वाङ्क्षोपि गोकर्णोपि भुजङ्गमे ॥११४॥
जलव्यालेऽलीगर्दोपि मेषे स्यादेककुण्डलः ।
आसीराशी च दंष्ट्रायां निर्मोके निलयन्यपि ॥११५॥
विहङ्गे पतत्रिरपि पिच्छं पिच्छमपि स्मृतम् ।
परपुष्टान्यभृतौ च पिके वर्हिणि वर्हिणः ॥११६॥
वायसे बलिपुष्टोपि द्रोणोपि द्रोणकाकवत् ।
सारस्यां लक्ष्मणी क्रौञ्च्यां कुञ्चा चाषेकिविः किकीः ॥
किकिदीविरपि प्रोक्तः हरिणे टीटिभेपि च ।
कलविङ्के कुलिङ्गोपि दात्यूहे कालकण्टकः ॥११८॥
दात्यूहोपि बलाका बकेरुका बिसकण्टिका ।
मेधाव्यपि शुके तैलपायिकायां निशाटनी ॥११९॥
कपोते पारावतोपि मत्स्ये मत्स्योथ तन्तुणो ।
स्मृतो वरुणपाशोपि नक्रे शङ्कुमुखेपि च ॥१२०॥
षड्दार कूर्म्ये इत्येष तिर्यक्काण्डशिलोञ्छितः ।



नारकास्तु नैरायिकाः पातालन्तु तलं रसा ॥१२१॥
इति पञ्चमकाण्डस्य शिलोञ्छोऽयं समर्थितः ।



जीवोपि चेतनं जन्तौ प्राणी जन्मोपि जन्मनि ॥१२२॥
जीवातु जीवितेऽथायुः पुंस्युदन्तोपि चायुषि ।
सङ्कल्पे स्याद्विकल्पोपि मनोनिन्द्रीयमप्यथ ॥१२३॥
शर्मं सौख्यं पीडा बाधा चर्चा चर्चोपि कथ्यते ।
विमतीसारोनुशयेऽथार्था अपीन्द्रियार्थवत् ॥१२४॥
सुदामस्तु सुधीमोपि कर्खेटः कर्कटोपि च ।
जरठे जरठोम्लेच्छे रागो रवदूव स्मृतः ॥१२५॥
निषादो निमधो गर्जे गर्जोमद्रोपि मन्द्रवत् ।
आकरो निकरो युग्मे जकुटोथ कनीयसि ॥१२६॥
अनिष्टं विग्रहः शब्दप्रपञ्च निखिले पुनः ।
स्यान्निशेषमनूनञ्च सकलस्यापि खण्डवत् ॥१२७॥
मलीमसे कश्मलञ्च निकृष्टे चाप्यरेफणी ।
कडङ्गं रमणीयञ्च रम्ये नित्यं सदातनम् ॥१२८॥
शाश्वती किञ्चने दीय दूरन्तिकतमे स्मृतम् ।
एकाकिन्यवगणोपि प्रागथादौ प्रकीर्त्तितान् ॥१२९॥
मध्यमे मध्यन्दिनञ्च निरर्गलमनर्गले ।
बहुरूप पृथग्रूप नानाविधा पृथग्विधि ॥१३०॥
कम्पाकम्पोथ छन्नेस्याच्छादितं पिञ्छितेपि च ।
प्रकाशिते प्रादुष्कृतमवश्यायामरूषणम् ॥१३१॥
बुधैरवगमनावगमने अपि कीर्त्तिते ।
अन्दोलनमपि प्रेषां थोदस्तमप्युद्धितम् ॥१३२॥
भिदाभिन्नोदितमपीरन्तोथाङ्गीकृते पुनः ।
कणीकृतं स्वीकृतञ्च किम्बे दांतमपि मातम ॥१३३॥

प्राप्ते विघ्ने विघ्नतश्च भवेत्प्राप्ता तमित्यपि ।
अटाटाख्याः पर्य्यटनमानुपूर्व्यमनुक्रमे ॥१३४॥
परिरम्भोपि संश्लेषे स्यादुद्घातोप्युपक्रमे ।
जातोजातमपि स्पर्द्धा सङ्घर्षोप्यथ विक्रिया ॥१३५॥
विकारोपि क्षती चापि विलम्बस्तु समर्पणे ।
दिष्ट्या समुपजोषं सर्व्वदा सदंसमत्वनात् ॥१३६॥
निर्झ्जरे च स्वतीहेतौ येन तेन च कीर्त्तितौ ।
अङ्गो सम्बोधनेपीति षष्ठकाण्डः श्लिष्टोऽख्यितः ॥१३७॥

इति हैमनाममालायां श्लिष्टोऽख्यितः समर्थितः ।






कलिकाता ।

निमतलाघाट ष्ट्रीट ८ संख्यक भवने संवाद-ज्ञानरत्ना-
करयन्त्रे श्रीभुवनचन्द्रवसाक-द्वारा मुद्रित ।

सन १२८४ साल ।

